॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१४२

# साहित्यशास्त्रीयोनिबन्धः

( आचार्य-तृतीयवर्षपरीक्षायां साहित्यविषये निर्धारितम् )

नवीन पाठ्यक्रमानुसार लघु एवं अतिलघु
प्रश्नोत्तर सहित




लेखकः—
पं. वेदव्यासशुक्लः





चौखम्बा सुरभारती प्रकाशन

वाराणसी



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# परीक्षापयोगी प्रश्नोत्तरात्मक पुस्तकें
## (संस्कृत भाषा में)

अभिधावृत्तिमातृका-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
अलङ्कारशास्त्रस्येतिहासः । परमेश्वरदीन पाण्डेय
उत्तररामचरितादर्श । डॉ. रमाशंकर मिश्र
कर्पूरमंजरी-दीपिका । गौरीनाथ मिश्र 'भास्कर'
कादम्बरी-कला-प्रकाशः । डॉ. नरेश झा
कादम्बरी-सोपानम् । शिवप्रसाद द्विवेदी
काव्यप्रकाश-रहस्यम् । श्रीरामजीलाल शर्मा
काव्यमीमांसा-दीपिका । वेदव्यास शुक्ल (१-५ अध्याय)
काव्यशास्त्रस्येतिहास-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
काव्यालङ्कारसूत्रवृत्तेः-आलोकः । (तृतीयाधिकरण प्रश्नोत्तरी) । डॉ. नरेश झा
किरातार्जुनीय-रहस्यम् । डॉ. कृष्णदेव प्रसाद । १-२ सर्ग, ३-६ सर्ग
कुमारसम्भवम्-रहस्यम् । श्री रामप्रसाद त्रिपाठी । १-२ सर्ग
कुवलयानन्दालोकः । डॉ. नरेश झा
चन्द्रकलानाटिका-रहस्यम् । परमेश्वरदीन पाण्डेय
चन्द्रालोक-रहस्यम् । मानवल्ली तथा बेताल
चम्पूरामायण सोपानम् । डॉ शिवप्रसाद द्विवेदी
तर्कभाषा-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
तर्कसंग्रह-रहस्यम् । श्रीकीर्त्यानन्द झा
दशकुमारचरित-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
ध्वन्यालोक-प्रकाशिका । श्री राजेन्द्रप्रसाद कोठ्यारी
नलचम्पू-रहस्यम् । पं. परमेश्वरदीन पाण्डेय
नाटयशास्त्र-प्रश्नोत्तरी । १-७ अध्याय; १७-२० अध्याय
नैषधीयचरित-प्रश्नोत्तरी । मिश्र एवं द्विवेदी । १-५ सर्ग; १०-१३ सर्ग
परमलघुमञ्जूषा-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
परिभाषेन्दुशेखर-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
पाणिनीयशिक्षा-सोपानम् । डॉ. बालगोविन्द झा
प्रतिमानाटक-रहस्यम् । डॉ. रमाशंकर त्रिपाठी
प्रबन्धसङ्ग्रहः (व्याकरणाचार्य निबन्ध) । डॉ. ब्रह्मानन्द त्रिपाठी
भट्टिकाव्य-दर्पणः । स्वामी प्रज्ञान भिक्षु । १-४ सर्ग, ५-८ सर्ग
भट्टिकाव्यालोकः । डॉ. रमाशङ्कर मिश्र । १४-१७ सर्ग, १८-२२ सर्ग
भारतीयसंस्कृति-सोपानम् । आचार्य शिवप्रसाद द्विवेदी
मध्यसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्रशास्त्री (१-४ खण्ड) सम्पूर्ण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१४२

# साहित्यशास्त्रीयोनिबन्धः

( आचार्य-तृतीयवर्षपरीक्षायां साहित्यविषये निर्धारितम् )

**नवीन पाठ्यक्रमानुसार लघु एवं अतिलघु प्रश्नोत्तर सहित**

लेखकः—

पं. वेदव्यासशुक्लः



चौखम्बा सुरभारती प्रकाशन

वाराणसी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकाशक
चौखम्बा सुरभारती प्रकाशन
(भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक)
के. 37/117 गोपालमन्दिर लेन
पो. बा. नं. 1129, वाराणसी 221001
दूरभाष : 2335263, 2333431

सर्वाधिकार प्रकाशकाधीन
पुनर्मुद्रित संस्करण 2003 ई.
मूल्य : 50.00

अन्य प्राप्तिस्थान
चौखम्बा संस्कृत प्रतिष्ठान
38 यू. ए. बंगलो रोड, जवाहर नगर
पो. बा. नं. 2113
दिल्ली 110007
दूरभाष : 23956391



चौखम्बा विद्याभवन
चौक (बैंक ऑफ बड़ौदा भवन के पीछे)
पो. बा. नं. 1069, वाराणसी 221001
दूरभाष : 2420404
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# प्रास्ताविकम्

हितेन रसेन वा विगलितवेद्यान्तरज्ञानलवेन सह युक्तं सहितम्, तस्य भावः साहित्यम्। अथवा हितं पिहितमावृतं वा हितं सन्निहितं कविभी रक्षितं वा ब्रह्मणा अवहितं ध्यातं वा तेन सह सहितं, तस्य भावः साहित्यम्, इति साहित्य-पदविवेचनधुरन्धराः। पदमिदं वाङ्मयार्थेऽपि प्रयुक्तं श्रीहर्षादिभिः—'साहित्ये सुकुमारवस्तुनिचये श्रावग्रहग्रन्थिले' 'नमोऽस्तु साहित्यरसाय तस्मै' इत्यादिकम्। प्रतीयतेऽनेन व्याख्यानेन शब्दस्य लक्ष्यलक्षकबोधनपरम्परा। तथैव च प्रवृत्ति-रग्रजानां शब्दार्थौ सहितौ काव्यमित्यादिभाषणरतानाम्। व्यक्तिविवेककृता तु स्वीकृता साहित्यस्य तुल्यकक्षत्वेनान्यूनानतिरिक्तवृत्तिता। वक्रोक्तिजीवित-कारेण, राजशेखरेण, बिल्हणेन च स्व-स्वग्रन्थे काव्यार्थे प्रयुक्तः साहित्यशब्दः। अतोऽस्माभिरपि तथैवानुकृतः। तस्य शास्त्रम् अनधिगतार्थज्ञापकं शासनम्। तत्रत्या ये विषयास्तेषां निबन्धनमेवास्य ग्रन्थस्य प्रयोजनम्।

काव्यशास्त्रस्य विस्तीर्णत्वात् पल्लवग्राहिज्ञानपरम्पराप्रसारात् सम्पूर्णग्रन्थ-पठनालसखिन्नत्वात् विषयप्रतिपादनशक्तिसमुन्मेषाभावात् सर्वत्रोपाधिलिप्सा-विलासात् उच्चपरीक्षासु सर्वत्र स्वशास्त्रीयनिबन्धस्यानिवार्यत्वाच्च सुरभारती-समुपासकछात्रकाठिन्यमालोच्य संक्षिप्य प्रस्तुतोऽयं साहित्यशास्त्रीयो निबन्धः। निर्माणेऽस्य चौखम्भा-सुरभारती-प्रकाशकानां पौनःपुन्येन प्रेरणमेव प्रधानम्।

गुरुभिरध्यापितं शास्त्रं कियद् बुद्धमिति ग्रन्थं दृष्ट्वा त एव महर्षयो वक्ष्यन्ति। सन्ति बहवोऽपि ग्रन्थाः विषयेऽस्मिन् भाषान्तरेषु। परं संस्कृतछात्राणां कृते तत् सर्वं निष्फलम्। तत् सर्वं पठनोपयोगि न च लेखनोपयोगि, यतो हि संस्कृतभाषायामेवोत्तरमपेक्ष्यते। अतस्तत्काठिन्यनिरासाय एव कृतोऽयं प्रयासः न च ज्ञानप्रदर्शनाय पाण्डित्यलाभाय वा। धृष्टतेयं मदीया क्षन्तव्या गुरुभि-राधिकारिकविद्वद्भिः सारान्वेषिभिश्च।

येषां महानुभावानां ग्रन्थाः विचाराश्चात्र प्रत्यक्षं परोक्षं वा समुपयुक्तास्तान् प्रति सादरं प्रणतयः विलसन्तुतराम्। निर्माणेऽस्मिन् येषां प्रत्यक्षं परोक्षं वा योगदानं वर्तते तेऽपि प्रणम्याः। तान् आचार्यान् अपि नमामि यान् स्मरति लोकोऽयं सबहुमानं प्रकाशकत्वेन। सदसद्व्यक्तिहेतवः सन्त एवाऽत्र प्रमाणम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानवसुलभप्रमादात् दोषाभावोऽत्रेति वक्तुं नोत्सहे। अक्षरयोजकस्य प्रथम-पाठकस्य वा मम एव यत् किमपि स्खलनं तत्सर्वमेव संशोध्य सुधीभिः कीटानु-विद्धपुष्पवत् स्वीकरणीयम्। सूचनादानानुग्रहेण स्मर्तव्योऽयं जन इत्यपि प्रार्थये मुहुर्मुहुः।

छात्राणां पाठकानां वा हृदये मनागपि सन्तोषभावनोदिता भवेत् चेत् स्वीयं सर्वं श्रमं सफलं मंस्ये। दोषा मम गुणाश्च गुरूणां प्रातःस्मरणीयानामिति भूयो भूयः सप्रश्रयं निवेदयति।

विद्वत्पदकमलचञ्चरीकः
**शुक्लो वेदव्यासः**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अनुक्रमणिका



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

# साहित्यशास्त्रीयो निबन्धः

## ( १ ) काव्यम् अथवा काव्यपुरुषः

कवेः कर्म काव्यमुच्यते। संसारस्यास्य रचनाकर्ता अपि कविः। यथा चोक्तम्—'कविर्मनीषी परिभूः स्वयम्भू'रिति। अत एव लोकमपि काव्यमिति फलितार्थः। किन्त्वर्थेऽस्मिन् काव्यशब्दप्रयोगो न प्रशस्यतरः। परम्परा अपि न समर्थयति तथ्यमिदम्। प्रख्यात कोषकारो अमरसिंहः काव्यं कविं च पर्याय-रूपेण लिखति—

'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः'।

परन्तु विवेच्यः काव्यशब्दः कविशब्दपर्यायात् भिन्नः कथयति च लोकः—'काव्यं पठामि, लिखामि, शृणोमि, विवेचयामि, समालोचयामी'त्यादि। नहि सम्भवा समालोचना विवेचना कविपर्यायभूतस्य काव्यशब्दस्य। अत एव निरूपणीयाऽस्य व्युत्पत्तिः परम्परा च।

ननु कोऽयं कविर्यस्य कर्म काव्यमुच्यते इति जिज्ञासायां वैजयन्ती कोषो वदति—प्राज्ञः काव्यकृतौ कविः। यास्केन कविः क्रान्तदर्शी मननशीलो दूरद्रष्टा च स्वीकृतः। अमरसिंहोऽपि लपति—'संख्यावान् पण्डितः कविः।' व्याकरण-रीत्या कविशब्दसाधनसङ्केते दत्तः किरातार्जुनीयशिवपुराणयोस्तुलनात्मकाध्य-यनस्य चतुर्थवर्णनायां १४१ पृष्ठे पण्डितवेदव्यासशुक्लेन—'केषाञ्चिद् विदुषा-मनुसारं कु ( शब्दे ) वा कुङ् ( शब्दे ) पाणिनिप्रोक्तधातुना निष्पद्यते कविशब्दः। मुकुटादिकोषकारैश्च 'कव्' ( वर्णे ) धातुना निष्पादित कविशब्दः। शब्दोऽयं वान्तो बान्तश्च। सामान्यतयाऽनेन शब्देन क्रान्तदर्शनं कृत्वा वस्तुवर्णनरतो विद्वान् व्यज्यते। कवेः कृते क्रान्तदर्शनं तद्वर्णनरुभयमस्त्यावश्यकं यथा स्वीकरोति भट्टतौतः'—

'दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः।
तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना॥'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवार्थगुम्फनं कवेरावश्यकं धर्मः। या घटना कथा वृत्तान्तो वा यथा लोके प्रसिद्धस्तथैव वर्णनेन कवित्व-काव्यशब्दोऽपि ऋग्वेदे ( ५।३९।५; ९।९७।७ १०।५५।५ ), यजुर्वेदे ( १०।३४, २०।७७, १५।४, ३३।७२ ) च बहुषु स्थलेषु प्रयुक्तः।

परं लाभः खपुष्पसमानः रासभशृङ्गतुल्यः वन्ध्यासुतसमश्च। यथा च वदति तत्रभवान् राजशेखरः काव्यमीमांसायाम्—

'भूतपूर्वस्य मन्त्रस्य दर्शनात् ऋषयो यथा।
नवगुम्फार्थयोस्तावद् दर्शनात् कवयोऽभवन्' ॥

कविशब्दस्य प्रयोगो वेद-ब्राह्मणोपनिषत्सु गीतापुराणादिष्वपि दृश्यते। यथा—'कवयः पुरेदम्, कविं कवित्वा ( ऋक् ), त्वा कवे, प्रतिमुञ्चते कविः ( यजुः ), ते वै कवयः ( ऐतरेय ), एते वै कवयो ( शतपथ ), वै कवयः ( तैत्तिरीय ), कविर्मनीषी ( ईशावास्य ), तत् कवयो वदन्ति ( कठ ), कवयो वेदयन्ते ( प्रश्न ), कवयो यान्यपश्यन् ( मुण्डक ), शृङ्गारी चेत् कविः ( अग्निपुराण ), आदिकवये ( भागवत ), कवयोऽप्यत्र मोहिताः ( गीता )'।

उपरि प्रदर्शितेषु स्थलेषु कविशब्दस्यार्थोऽस्ति विस्तृतः परन्तु परवर्तिकाले शनैश्शनैः कविशब्दार्थे सङ्कोचो दृश्यते। यः कविशब्दः पुराकाले ब्रह्मणः सर्वनियन्तुर्वाचक आसीत् स एव कालक्रमेण पद्यगद्यादिलेखकार्थे प्रयुक्तो दृश्यते। सम्प्रति चास्मिन्नेवार्थे रूढः।

ईदृग्विधस्यैव कवेः कर्म काव्यमुच्यते। दृश्यश्रव्यत्वभेदेन द्विविधमपि काव्यमधुना साहित्यमुच्यते। साहित्यं परिभाषयन्तो वदन्ति विद्वद्वरेण्याः श्री पं० जगदीशचन्द्रमिश्राः अलङ्कारशास्त्रस्येतिहासे १४ पृष्ठे—'सहितं रसेन युक्तं विशिष्टं साहित्यं, तस्य भावः साहित्यम्। अथवा हितेन निरतिशयप्रेमास्पदेन इतरेच्छानर्हानिच्छाविषयेण रसेन सहितमुभयत्र व्यञ्जकत्वप्रतिपादकत्वान्यतरसम्बन्धेन विशिष्टं तस्य भावः। किं वा हितं पिहितमावृतं तत्सहितम्। अपि वा हितं सन्निहितं नेदिष्ठं वा तस्य भावः।······एतेन साहित्यशब्दस्य काव्यस्वरूपमर्थं इति सङ्कोचः कृतो वेद्यः।'

डा० लक्ष्मीनारायणसिंहश्च अलङ्कारप्रस्थानविमर्शे ९ पृष्ठे समर्थयति भावममुमेव—'समयतश्चापमशो यतो हितसाधकेन तत्त्वेन सहितः साहित्यमाख्यामपि भेजे। एवं हितयुक्तस्य शब्दार्थस्य कालादिलोकादिसहितस्य च भावं बिभ्रदेषः साहित्यशब्दः सहितशब्दात् भावे ष्यञि कृते निष्पद्यते'। पं० वेदव्यास शुक्लश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वीये निवन्धे विशदयति—'हितेन सह सहितं, सहितस्य भावं साहित्यम् । हितं द्विविधम्—लौकिकं पारलौकिकं च । अथवा ईष्टापत्तिरनिष्टनिवारणं च । अनयोः सोपपत्तिर्विवेचनं यत्र तत् साहित्यमिति फलितार्थः ।'

वक्रोक्तिजीवितकारोऽपि वक्ति किञ्चिदित्थमेव—

'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनी ।
बन्धे व्यवस्थितौ काव्यं तदविदाह्लादकारिणी ॥' ( १।७ )

साहित्यशब्दस्य काव्यार्थतां ध्वनयन् भणति बिल्हणः विक्रमाङ्कदेव-चरिते—

'साहित्यपाथोनिधिमन्थनोत्थं
काव्यामृतं रक्षत हे कवीन्द्राः
यदस्य दैत्या इव लुण्ठनाय
काव्यार्थचौराः प्रगुणीभवन्ति ।'

काव्यं कवेश्चिन्तनप्रासादम् । यावद् काव्यं भुवि वर्तते तावत् कवेः सारस्वतं यज्ञं परिपूर्णम् । यथा चोक्तम्—

'काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि ।
तावत् सारस्वतं स्थानं कविरासाद्य मोदते ॥'

सम्पूर्णं ज्ञानं विज्ञानं भूगोलं खगोलमितिहासादिकं च काव्यविषयपरिधौ समापतति । किञ्चिदपि वस्तु लोके ईदृग्विधं नास्ति यत्र काव्यप्रसरोऽप्रासा-वसरः । सुष्ठूक्तं केनचिद्—

'न स शब्दो न सा विद्या न स न्यायो न सा कला ।
जायते यत्र काव्याङ्गमहो भारो महान् कवेः ॥'

सुखपूर्वकचतुर्वर्गफलप्राप्तिसाधकं काव्यमेव । नास्ति काव्यादन्यद्वस्तु पुरुपार्थ-चतुष्टयसाधकं सुखपूर्वकं स्वल्पबुद्धीनां राजश्रेष्ठिसुतानां कृते । यथा च तत्रभवान् विश्वनाथः—

'चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥'

अन्यैरपि समर्थितम्—

धर्मार्थकाममोक्षेपु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधु काव्यनिषेवणम् ॥'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काव्योपयोगितानिरूपणरतैः सर्वैरेव शास्त्रकारैः काव्यमहत्त्वराशिरुद्भावितो लोकोपयोगिज्ञानवर्गः । तत्र रुद्रटः—

'ननु काव्येन क्रियते सासामवगमश्चतुर्वर्गे ।
लघु मृदु च नीरसेभ्यस्ते त्रस्यन्ति शास्त्रेभ्यः ॥'

शास्त्रकाठिन्यभीता अपि काव्येन सरलतया शास्त्रज्ञानमधिगच्छन्ति । यथा—कटुकौषधिभीता अपि बाला शर्करावेष्टितानि गुलिकानि सरलतया गृह्णन्ति तथैव तेऽपि । काव्येन धर्मोऽपि सिद्ध्यति, अज्ञानमपि दूरं याति, यशः अपि मिलति, व्यवहारशिक्षा अपि सुकरा, अनिष्टनिवारणमपि भवति, आत्मपरितोषोऽपि च भवति । यथा चोक्तम्—

'धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥'—कुन्तकः
'काव्यं सद् दृष्टादृष्टार्थप्रीतिकीर्तिहेतुत्वात् ॥'—वामनः
'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥'—मम्मटः
'कीर्तिपरमाह्लादराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य ।'
—पण्डितराजः

को न जानाति चित्तानन्दजनिका हृदयाह्लादकारिका सहृदयहृदयहारि परिशीली लसिता प्रेमवाहिनी रससञ्चारिणी कामिनीव हावभावकटाक्षभुजाक्षेपप्रभृतिभिः रसास्वादनसुखपरम्परां जनयन्ती कवीनां कवितेति । सैव हि जडमपि विज्ञापयति, निर्बलं सबलयति, निरुत्साहिनं समुत्साहयति, अमलं यशस्तनोति, व्यवहारिणं व्यवहारपरिष्यन्दसौन्दर्यं प्रसारयति, निरञ्जनं रञ्जयति, निर्धनं धनयति, दुःखिनं सुखयति, किमन्यत् 'काव्यसम्बन्धिनी कीर्तिः स्थायिनी निर पायिनी' तदित्थं काव्यं सर्वथा सर्वैः ज्ञातव्यम् ।

—श्रीबालकृष्ण भट्ट शास्त्री ।

वहुभिद् न स्वीकृता काव्यस्य इयमुपयोगिता पूर्वनिर्दिष्टा । तेषां मते काव्यमग्राह्यम् असदर्थाभिधायित्वात् । उपदेष्टव्यमपि न अनुचितोपदेशकत्वात् असंस्कृतार्थाभिधानाच्च । यथा च—

'काव्यालापांश्च वर्जयेत् काव्येन हन्यते शास्त्रम् ।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाश्चात्यविचारकाग्रणी प्लेटोमहोदयोऽपि बहून् दोषान् दर्शयति । तन्मते—'काव्यमनुकरणमात्रं भावप्रधानं भयादिभावसमुत्पादकं च । अत एव तत्र पुनरुक्तिः तर्काभावो असत्यतादयो बहवो दोषाः ।'

किन्तु अरिस्टाटिलादिभिरेव एते दोषाः सोपपत्तिकमपास्ताः । यथा—'काव्यं नानुकृतिमात्रं कविप्रतिभास्वातन्त्र्यात् । तर्काभावोऽपि तत्र न प्रज्ञाप्रतिभयोरवस्थानात् । भयस्थायिनि भयानकेऽपि रसे न भीतिवृद्धिः, अपि च भावाख्यव्यापारेणैव एतेषां भोगो नान्यथा ।'

सर्वमेतदज्ञानविलासमात्रमेव । स्वभावोक्तिरसत्याभिधानापवारिकाऽस्त्येव । काव्येषु दृश्यमानोऽसदुपदेशो निषेधमुखेनैव न च विधिमुखेन । यथा च राजशेखरः काव्यमीमांसायाम्—

'अस्त्ययमुपदेशः किन्तु निषेध्यत्वेन, न विधेयत्वेन इति यायावरीयः ।'

अत एव स्वीकरणीयैव काव्यस्य पूर्वोल्लिखिता उपयोगिता तर्काभावात् लोकयात्रासाधकत्वात् कल्याणमूलकत्वाच्च । यथा च डा० लक्ष्मीनारायणसिंहः अलङ्कारप्रस्थानविमर्शे ८ पृष्ठे—

'एवं काव्योपयोगितायाः विरोधिनः सर्वेऽपि असदुपदेशकत्वाऽसत्यासम्यार्थाभिधायित्वादयो दोषाः प्रत्याख्याताः ।'

अत एवाऽस्ति काव्यं सज्जनहृदयाह्लादकं लोकयात्रासाधकं सकलज्ञानविज्ञानोत्तमं बुधैराश्रयणीयम् । को न जानाति काव्यस्य महिमानम् ? कः शक्तिशाली विशिष्टः काव्यबन्धात् ? किमत्र नास्ति—वेदानाममृतमुपनिषदां ज्ञानं, ब्राह्मणानामारण्यकानां कथानकं, गृह्यसूत्राणां नियमाः, मन्त्रतन्त्राणां स्वारस्यं, दर्शनानां सिद्धान्ताः, इतिहासस्याङ्कुराः समाजोन्नतेरवनतेश्च चित्राणि, भूगोलखगोलयोश्चर्चा ।

अत एव सज्जनानां हृदयस्य विश्रामस्थानं काव्यमिति स्वीकरणीयमेव । यथोक्तम्—

'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।'

एतदपि—

'शब्दाश्रयं च समलङ्कृतमस्तदोषं काव्यं रसप्रसवि मत्सरि शब्दशास्त्री ।
श्रुत्वैव यत्र यतते च्युतिलम्भनार्थमुष्ट्रो यथोपवनसीमनि कण्टकार्थम् ।।'

काव्यं सत्पुष्पम् सुरभिप्रदानमेवास्य कार्यम् । यस्य नासिकाऽसुरभिं गृह्णाति स वैद्यं गच्छेत् । अक्ष्णोः प्रकाशकं, हृदयस्य विकासकं, मस्तिष्कसुरक्षकं च काव्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## काव्यपुरुषः

रूपकं भारतीयचिन्तनधारायाः विशिष्टा चिन्तनशैली। काव्यस्वरूप-बोधनाय अपि बह्वयो रूपककल्पनाः कृताः। ऋग्वेदो वृषभरूपकेण, जयदेवो लतारूपकेण, अभिनवगुप्तः प्रासादरूपकेण, दण्डी बाणश्च सागररूपकेण काव्य-विश्लेषणं कुरुतः। राजशेखरश्च काव्यपुरुषं कल्पयति। तत्र जयदेवस्य लता-रूपकप्रकारः—

| | | |
|---|---|---|
| शरीरम् | लता | कविता |
| उत्पत्तिस्थानम् | भूमिः | मानसम् |
| कारणम् | वीजः | सरस्वतीसमाराधना |
| कार्यं | किसलयः | सूक्तम् ( काव्यम् ) |
| कर्ता | मेघः | कविः |

अभिनवगुप्तस्य प्रासादरूपकप्रकारः—

| | |
|---|---|
| भूमिः | छन्दः |
| भित्तिः | लक्षणम् |
| चित्रकर्म | अलङ्कारः |
| गवाक्षः | गुणयोजना |

दण्डी काव्यसागरं कल्पयति यत्तरणिश्छन्दः। कालिदासोऽपि सूर्यवंश-वर्णनं सागरतरणसमानं वदति। जिनसेनस्तु काव्यनिर्माणं तरङ्गोन्मत्तजलधि-तरणसमं कथयति। बाणः स्वीयामाख्यायिकां सागरसमानां वक्ति। राजशेखरः काव्यं पुरुषरूपेण कल्पयति। सम्भवतस्तस्य मानसे वैदिकी विराट्पुरुषकल्पना वर्तते। उद्धृता च तेन ऋग्वेदस्येयमृचा—

> 'चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य।
> त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्यानाविवेश ॥'

कुमारिलभट्टमतेऽत्र सूर्यस्तुतिः। सायणस्तु यज्ञपरकं सूर्यपरकं चार्थमुद्भाव-यति। वैयाकरणाः व्याकरणोत्पत्तिं दिशन्ति। भरतस्तु नाट्योत्पत्तिं निगम-यति। उभयोरर्थाश्चाधोलिखिताः—

| मूलशब्दाः | वैयाकरणैरभिप्रेता | नाट्यशास्त्रीयैरभिप्रेताः |
|---|---|---|
| चत्वारि शृङ्गाः | नामाख्यातोपसर्गनिपाताः | चत्वारो वर्णाः |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| | | |
|---|---|---|
| | वा | |
| | परापश्यन्तीमध्यमावैखरीति | |
| | ( उद्योतानुसारम् ) | |
| त्रयोऽस्य पादा | भूतभविष्यद्वर्तमानानामानः | कण्ठ-हृदय-मूर्धास्थानानि |
| | वा | |
| | प्रातः, मध्याह्नः, सायम् | |
| द्वे शीर्षे | नित्यशब्दाः, अनित्यशब्दाः | द्विविधा काकुः |
| | वा | |
| | व्यङ्ग्य-व्यञ्जकाः | |
| | वा | |
| | इहलोकः परलोकश्च | |
| सप्तहस्तासोऽस्य | सप्तविभक्तयः । | सप्तस्वराः |
| त्रिधाबद्धः | कण्ठहृदयमूर्धास्थानबद्धाः | षडलङ्काराः |
| | वा | |
| | स्तुत्युपासनाप्रार्थना | षडङ्गानि |
| वृषभः | वर्षणकर्ता | तथैव |
| रोरवीति | शब्दं करोति | तथैव |

राजशेखरस्य काव्यपुरुषस्तु हिमालये पुत्रार्थं तपोनिरतायाः मातुः सरस्वत्याः समीपं विधातुर्वरदानेनावतरति चरणौ स्पृशति छन्दोमय्या वाण्या च वदति—

'यदेतद्वाङ्मयं विश्वम् अर्थमूर्त्या विवर्तते ।
सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ ॥'

एतच्छ्रुत्वा माता सरस्वती कथयति—

'पुत्रक ! छन्दोमय्याः वाण्याः प्रणेताऽसि । वाङ्मयमाताऽहमपि त्वया जिता । पुत्रात् पराजयो द्वितीयपुत्रजन्ममहोत्सवसमः । पूर्वं सूरिभिर्गद्यमेव ज्ञातं त्वया तु छन्दोमयी वाणी प्रवर्तिता । अत एव प्रशंसनीयोऽसि ।'

काव्यपुरुषजन्मसङ्केतो मिलत्यन्यत्रापि । परन्तु तन्नाभिधानाभावः । वाल्मीकीरामायणेऽपि विधिप्रेरणयैव नूतनच्छन्दसामवतारकथा । महाभारतेऽपि शान्तिपर्वणि सरस्वतीसूनुसमुत्पत्तिकथा वर्णिता । शल्यपर्वणि तु सरस्वती नदीरूपेण कल्पिता, यत्र सारस्वतेयनाम्नो दधीचिसुतावाप्तिः कथिता । वायुपुराणेऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दधीचिसरस्वतीसूनुः सारस्वत इति कथा वर्णिता। भरतेनाऽपि नाट्योत्पत्तिः ब्रह्मणैव सूचिता। अत्रत्यो ब्रह्माशब्दः कविपर्याय इति श्रीमदभिनवगुप्तपादाचार्यः। अश्वघोषोऽपि आङ्गिरससरस्वतीसुतकथानकं सूचयति सौदरनन्दे।

राजशेखरेण काव्यपुरुष एव प्रथमोऽस्ति कविरिति सूचितम्। भवभूतिना चोत्तररामचरिते वाल्मीकिः एव प्रथमकविरूपेण स्वीकृतः। वाल्मीकिरामायणेऽपि भङ्ग्यन्तरेण एतादृशी एव सूचना।

अस्य काव्यपुरुषस्य शरीरं वर्णयन् वदति राजशेखरः सरस्वतीमुखेन— 'शब्दार्थौ चास्य शरीरम्। प्राकृतं बाहुः। पिशाचभाषा चरणौ। गुणाः गुणस्थानीयाः। मिश्रभाषा वक्षःस्थलम्। संस्कृतं मुखम्। छन्दांसि रोमस्थानानि। अलङ्काराश्चालङ्करणभूताः। रस आत्मा। वचनविन्यासो रीतिः। प्रवृत्तिश्च वेषविन्यास' इत्यादि।

विद्यानाथेनाऽपि काव्यपुरुषरूपकं कल्पितम्। तत्र रीतयः स्वभावस्थानीयाः। विश्वनाथानुसारं च रीतयोऽवयवसंस्थानादिवत्। राजशेखरेण दोषाणामुल्लेखो न विहितः। सम्भवतः दोषयुक्तं काव्यं तन्मते काव्यमेव नास्ति। विश्वनाथेन तु दोषाणां चर्चा कृता यथा दोषा काणत्वादिवद्।

गोपेन्द्रत्रिपुरहरभूपालेन तु काव्यवध्वाः कल्पना कृता। तदनुसारं रूपकयोजना तु अधोलिखिता—

| | |
|---|---|
| कृतिः | वधूः |
| वाक्यम् | अङ्गम् |
| गुम्फः | मूर्तिः |
| वस्तु | शिरः |
| अलङ्काराः | परिष्कारः |
| रीतिः | प्राणाः |
| गुणाः | गुणाः |

वामनेन रीतिरात्मारूपेण स्वीकृता। परन्तु तट्टीकाकारेण भूपालेन तु प्राणरूपेण स्वीकृता रीतय, इति काव्यपुरुषकल्पनासङ्क्षेपः संस्कृतसाहित्यस्य।

## (२) काव्यपरिभाषा: काव्यस्वरूपं वा

ईदृग्विधस्य काव्यस्य का परिभाषा इति तु विचारणीयमेव। प्रतिदिवसम् अवलोक्यमानविषयाणां परिभाषणमतीव कठिनम्। यथोक्तं पं० वेदव्यासशुक्लेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किरातार्जुनीयशिवपुराणयोस्तुलनात्मकाध्ययने १३९ पृष्ठे—'सम्यग्रूपेण विचारिते प्रतिभातीदमेव यत् सरलस्य सुव्यक्तस्य सर्वत्रस्थस्य परिभाषाकरणं कठिनप्रायम् ।' किं तावत् परिभाषाया परिभाषा इत्यपि विचारणीयम् । विश्वस्य साहित्यिकपदकोषस्य ( Dictionary of world literary terms ) ९२ पृष्ठे शिप्ले ( Shipley ) महोदयो लिखति यत्—परिभाषा कस्याऽपि शब्दस्योचितं स्पष्टं निश्चितं पूर्णं निर्धारणं भवति । सङ्क्षेपेणेदमवसीयते यत् तत्र—१. ज्ञातेनाज्ञातं गम्यते । २. परिभाष्यस्य सर्वप्रधानाङ्गानां विवेचनं करणीयमीदृग्विधं येन तत्स्वरूपं सुस्पष्टं भवेत्, नो भवेत् तेषां पुनर्व्याख्यानावश्यकता च । इति प्रतीच्यविचारसार: । अव्याप्त्यतिव्याप्तिरहितं लक्षणमिति प्राच्या: । अथवा समानासमानजातीयव्यवच्छेदो लक्षणार्थः इति । किन्त्वेतादृशी परिभाषा काव्यस्य अद्यावधि नोपलब्धा । प्राचीनकालादद्यावधि साहित्यधुरन्धरैः काव्यपरिभाषा: कृता: किन्तु न ता: सर्वांशत: शुद्धा । यथा च दर्शयिष्याम: । अत एव क्रमेण कश्चिदुपस्थाप्यन्ते मस्तिष्ककण्डूवपनोदाय क्षमायाचनपुरस्सरम्—

( १ ) तत्रादौ भामहः—काव्यालङ्कारे कथयति—'शब्दार्थौ सहितौ काव्यम्' इति । एतल्लक्षणं तु सामान्यजातीयं केवलं स्वरूपाधायकं च, न च कमप्युत्कर्षाधायकम् । समालोचकास्त्वत्र स्वरूपाधायकमपि लक्षणं न स्पृशन्ति । शास्त्रात्मके वाङ्मयेऽपि शब्दार्थसाहित्यसम्भवात् यथा च गणपतिचन्द्रगुप्तो लिखति भामहस्य परिभाषा काव्येन साकं शास्त्रं भूगोलमितिहासं मौखिकवार्तालापमपि स्पृशति । अतोऽनया काव्याकाव्यनिर्णयो दूरमपेत: ।

( २ ) अथ दण्डी—शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली इति काव्यादर्शे दण्डिन: काव्यपरिभाषा । अत्रेष्टपदप्रयोग एव पूर्वलक्षणात् विशिष्ट: । समासत: परिभाषेयं भामहस्य व्याख्यानभूता । अत एव विद्वद्भिरप्राप्तसमादरेयं परिभाषा ।

( ३ ) मम्मटः—काव्यप्रकाशे मम्मटाचार्यो लिखति—'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन: क्वापि ।' लक्षणमिदं दूषयन् लिखति विश्वनाथ: साहित्यदर्पणे यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा 'न्यक्कारो ह्ययमेव' इत्यादिश्लोकस्य विधेयाविमर्शदोष दुष्टतया काव्यत्वं न स्यात् प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता तस्मादव्याप्तिर्लक्षणदोष: । ननु कश्चिदे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वांशोऽत्र दुष्टो न पुनः सर्वोऽपीति चेत्, तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्याम् उभयत आकृष्यमाणमिदं काव्यमकाव्यं वा किमपि न स्यात्। न च कश्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषा किं तर्हि सर्वमेव काव्यम्। तथा हि काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते। अन्यथा नित्यदोषानित्य-दोषत्व-व्यवस्थाऽपि न स्यात्। एवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात्। नन्वीषदर्थे नञः प्रयोग इति चेत्तर्हि ईषद्दोषौ शब्दार्थौ काव्यम् इत्युक्तेर्निर्दोषयोः काव्यत्वं न स्यात्। सति सम्भवे ईषद्दोषौ इति चेत् एतदपि काव्यलक्षणे न वाच्यम्। अथ च शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नं गुणानां रसैकधर्मत्वस्य प्रतिपादितत्वात् इत्यादि।

( ४ ) इत्थं मम्भटलक्षणं निरस्य स्वीयं लक्षणं समुपस्थापितं सान्धि-विग्रहिकेण **महापात्रविश्वनाथेन**—'वाक्यं रसात्मकं काव्यम्' इति। किन्त्वेतल्ल-क्षणमपि खण्डितं श्रीकृष्णमोहनशास्त्रिणा स्वीयसाहित्यदर्पणटीकायाम्—'वाक्यं रसात्मकं काव्यम्' इत्यादिकाव्यलक्षणं चिन्त्यम्—वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः। न चेष्टापत्तिः महाकविसम्प्रदायस्याकुलीभावप्रस-ङ्गात्। लक्ष्यानुसारेण हि लक्षणव्यवस्था न तु वैपरीत्येन। वर्णितानि च महा-कविभिर्जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविवाण्यादिविलसितानि च। न च तत्रापि यथा कथञ्चित् परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम्, ईदृशरसस्पर्शस्य गौश्चलति, मृगो धावति इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात्, रस्यत इति योगस्य तु तदाभासादिमात्र एवाभ्युपगमात्। अतो मम्मटलक्षणम् एव ज्याय इति सारांशः।

( ५ ) एतदनन्तरमायाति **पण्डितराजजगन्नाथस्य** परिभाषा—'रमणी-यार्थप्रतिपादकः शब्दः काव्यम्' इति। रमणीयाः लोकोत्तरानन्दजनकभावना-विषयाः ये अर्था वाच्यलक्ष्यव्यङ्ग्यरूपास्तस्य विषयस्य बोधजनकः शब्दः सुप्ति-ङन्तरूपः काव्यम् इति लक्षणार्थः रमणीयता च लोकोत्तराह्लादजनकज्ञानगोच-रता। किन्त्वेतन्मतमपि खण्डितं सूरिभिः। ते च कथयन्ति—काव्यस्य योजना-रूपत्वात् व्यासज्यवृत्तित्वकल्पनानिष्प्रयोजना। काव्यद्वयव्यवहारापत्तिरपि निर्मूला। विजातीयैकचमत्कृतिजनकत्वेन एकस्यैव व्यवहारात् सहकारित्वं तूभयत्राप्यूभयोः। वेदादिलक्षणमपि शब्दार्थोभयनिष्ठमेवास्ति। अत एव सङ्ग-च्छते तत्रभवान् पतञ्जलिः 'तदधीते तद्वेद' इति सूत्रस्थः दोषभावगुणालङ्काराणां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काव्योत्कर्षप्रयोजकत्वात् सर्वसम्मतत्वेन अनुपहसनीयकाव्यलक्षणे न दोषभाक् तन्निवेशः। सामान्यलक्षणं तु जगन्नाथमतेऽपि अदोषादिपदा घटितमेवेत्यलं विस्तरेण।

बालकृष्णभट्टशास्त्रिणोऽपि कथयन्ति काव्यप्रवन्धे पूर्वपीठिकायां ११ पृष्ठे—'नास्मिन् लक्षणे कश्चिदंशोऽप्यदुष्ट इति विश्वनाथजगन्नाथादीनामाक्षेपः। परमेतत् सर्वमविचारमूलम्। न च सहृदयहृदयङ्गमम्...आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात्। आस्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकरूपं, तच्च शब्देऽर्थे चाविशिष्टम् इति भावना विषयेष्वर्थेषु सर्वथैव युक्तियुक्ता। यथा—

'उभौ यदि व्योम्नि पृथक्प्रवाहा,
वाकाशगङ्गापयसः पतेताम्।'

अथ चैकविशिष्टस्यैतस्य काव्यत्वम्। किञ्च रमणीयार्थप्रतिपादकः शब्दः काव्यम् इति वदतो मते तु काव्यं श्रुतम् अर्थो न ज्ञात इत्युक्तेर्व्याघातः। यतो हि दोषगुणालङ्काराणामुभयत्र साम्येऽपि एकस्य काव्यत्वमपरस्य नेति सर्वथाऽनुचितम् इत्यर्थग्रहणं सुष्ठु सार्थकम्।

**सारांशः**

काव्यशास्त्रिणा द्वौ वर्गौ स्तः। तत्रैको वदति काव्यत्वं शब्दस्यैवापरस्तु शब्दार्थयोरेव।

**तत्र प्रथमो वर्गः—**

'इष्टार्थव्यवच्छिन्ना पदावलिः काव्यम्।' —दण्डी

'निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसात्मकं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति'॥ —भोजः

'निर्दोषा लक्षणवती सरीतिर्गुणगुम्फिता।
सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक्'॥ —जयदेवः

'वाक्यं रसात्मकं काव्यम्'। —विश्वनाथः

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'। —जगन्नाथः

**अथ च द्वितीयो वर्गः**

मृदुललितपदाढ्यं गूढशब्दार्थहीनम्
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम्।
बहुकृतरसमार्गं सन्धिसन्धानयुक्तं
भवति हि शुभकाव्यं नाटकप्रेक्षकाणाम्॥' —भरतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'शब्दार्थौ सहितौ काव्यम् ।' —भामहः

काव्यशब्दो गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते ।' —वामनः

'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्ये तद्विदाह्लादकारिणि ॥' —कुन्तकः

'साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम् ।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ॥' —वाग्भटः

शब्दार्थौ वपुरस्य शब्दार्थवपुस्तावत् काव्यम् ।' —विद्याधरः

'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।' —मम्मटः

कविर्व्यापारो हि विभावादिसंयोजनात्मा रसाभिव्यक्त्यव्यभिचारी काव्यमुच्यते ।' —महिमभट्टः

'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ।' —क्षेमेन्द्रः

## ( ३ ) ध्वनिनिरूपणम्; काव्यस्यात्मा ध्वनिः ।

( सं० सं० वि० वि० ७८-८३ )

अलङ्कारशास्त्रे विभिन्नसम्प्रदायोत्पत्तिकारणमस्ति काव्यात्मान्वेषणमेव । कोऽस्ति काव्यस्यात्मा यस्मिन् विद्यमाने काव्ये वसति काव्यत्वमविद्यमाने तदभावविलास इति जिज्ञासाप्रशमनार्थमेव यतन्ते अलङ्कारशास्त्रसम्प्रदायाचार्याः । समर्थयति च डा० जगदीशचन्द्रमिश्रोऽलङ्कारशास्त्रस्येतिहासे—'काव्यस्यात्मा कः ? इत्यस्मिन् विषये एवालङ्कारिकाणां समक्षे प्रधानतया विवेचनीयं कर्तव्यमासीत् । किमिदं तादृशं वस्तु विद्यते यस्मिन् विद्यमाने काव्ये काव्यत्वं तिष्ठति तद्रहिते च तदपसरति इति जिज्ञासामवलम्ब्य स्वस्वबुद्ध्यनुसारेणोत्तरदान एव नानाविधसम्प्रदायानामुत्पत्तिरभूदिति पर्यालोचयन्ति ऐतिहासिककुशलाः । उक्तजिज्ञासानिवृत्तये एव केचिदलङ्कारं, केचिद् रीतिं केचिच्च ध्वनिं काव्यत्वेन प्रमाणयन्ति । भरतमुनित आरभ्य कालक्रमेण समीक्षाभेदे विभिन्नशताब्दीषु नवीननवीनतरसम्प्रदायानामुत्पत्तिर्जाता ।

अलङ्कारसर्वस्वटीकाकर्ता समुद्रबन्धोऽपि स्वीकरोतीत्थमेव—'इह विशिष्टौ शब्दार्थौ काव्यम् । तयोश्च वैशिष्ट्यं धर्ममुखेन, व्यापारमुखेन, व्यङ्ग्यमुखेनेति त्रय पक्षाः । आद्येऽप्यलङ्कारतो गुणतो वेति द्वैविध्यम् । द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्वेन वेति द्वैविध्यम् । इति पञ्चसु पक्षेषु आद्यः उद्भटादिभि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चम आनन्दवर्धनेन च।'

ननु कोऽसौ ध्वनिसिद्धान्तव्यवस्थितिकर्ता आनन्दवर्धन इति जिज्ञासायामुच्यते—नवमशताब्दीमध्यकाले काश्मीरप्रदेशे समुत्पन्न आनन्दवर्धन इति स्वीकरोति कल्हणपण्डितः। राज्ञोऽवन्तिवमर्णराज्यकाले (८५५-८८४) अभूदयमिति इतिहासकाराणां विचारः। ध्वन्यालोकवृत्तिरेवास्य रचनेति केचित्। ध्वन्यालोक एव इति बहवः। ध्वनिस्वरूपं प्रकाशयन् स वदति ध्वन्यालोकस्य प्रथमोद्योते—

'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः
तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम्॥'

बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिरिति संज्ञितः। परम्परया यः समाम्नातपूर्वः तस्य सहृदयजनमनः प्रकाशमानस्याभावमन्ये जगदुः। तेषां चामी विकल्पाः सम्भवाः—(१) शब्दार्थशरीरं तावत्काव्यम्। तत्र समुपयोगिनः अनुप्रासोपमामाधुर्योपनागरिकाद्यास्तु श्रुताः। किन्तु कोऽयं ध्वनिरिति। (२) ध्वनिर्नास्त्येव। प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारस्य काव्यत्वहानेः। (३) कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात् ध्वनिर्नास्त्येव। (४) ध्वनिस्तु प्रवादमात्रम्। (५) अन्ये तम् भाक्तमाहुः। (६) ध्वनेस्तत्त्वं तु गिरामगोचरम्। अतस्तत्स्वरूपं ब्रूम इति।

ननु किं ध्वनेः स्वरूपमिति जिज्ञासायामुच्यते—

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥'

प्रतीयमानं पुनरन्यदेव वाच्याद् वस्त्वस्ति वाणीपु महाकवीनां यत्तत्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलङ्कृतेभ्यो वाऽवयवेभ्यो व्यतिरिक्तमेव प्रकाशते प्रतीतेभ्यो लावण्यमिवाङ्गनासु। यथा ह्यङ्गनासु लावण्यं पृथङ् निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सः—इति वृत्तिकाराशयः।

ध्वनिसिद्धान्तं खण्डयन् वदति डा० लक्ष्मीनारायणसिंहः 'अलङ्कारप्रस्थानविमर्शे'—'काव्यस्यात्मा ध्वनिरि'ति लक्षणं ध्वनिकारस्य। अत्रेदं पृच्छ्यते—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदत्र त्रिविधेषु ध्वनिषु वस्त्वलङ्काररसरूपेषु क आत्मा काव्यस्य ? वस्तुरूप एव इति न वाच्यम्, प्रहेलिकादावपि तथात्वात् काव्यत्वापत्तेः। अलङ्काररूपो ध्वनिरपि तथा, अलङ्कार्यस्य रसरूपाद्यर्थस्य अभावे तस्याभावात्, कामं सर्वाप्यलङ्कारो रसमर्थं निषिञ्चति इति नियमेन रसार्थमेव तस्य स्वीकारात् रसादिरूपोऽर्थो ध्वनिरेव काव्यात्मेति स्वीक्रियते चेद् अभिमतमेवास्माकम्। तर्हि आद्ययोर्द्वयोः त्यागं कृत्वा केवलं रस एव काव्यात्मेति मन्तव्यम्। अत्ता अत्र निमज्जति इत्यादौ कथं वस्तुरूपं, ध्वनिकृतं काव्यत्वमिति तु न शङ्क्यम्, रसाभासतयैव तत्राऽपि स्वीकारात्। अन्यथा देवदत्तो ग्रामं यातीत्यत्रापि काव्यमङ्गीकर्तव्यं भवेत्, देवदत्तभृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेः, अस्त्विति चेत्, न, रसवत एव काव्यत्वस्वीकारात्।

महिमभट्टोऽपि दशदोषानुद्भावयति प्रसङ्गेऽस्मिन्—

'अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम्।
द्विवचनं वा शब्दौ च व्यक्तिर्ध्वनिर्नाम काव्यवैशिष्ट्यम्।
वचनं च कथनकर्तुः कथिता ध्वनिलक्ष्मणीति दश दोषाः'॥

किन्तु सर्वोऽयं तर्कवर्गो निराकृतो ध्वनिकारेण स्वयमेव। उपर्युक्तमतस्वीकारे रसोऽर्थो वाच्यो भविष्यति। ध्वनिकारेण तु व्यङ्ग्यतैवास्य स्वीकृता। ध्वनिमतं तु वस्तुतः रसमतस्यैव विकासमात्रम्। सव्यङ्ग्यो रसादिरेवार्थः काव्यस्य जीव इव शरीरस्य जीवनाधायकत्वादात्मा प्रधानमस्तीति विदुषां विचारसारः। अथ च ध्वनिकारोऽपि—

'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥'

यत्रार्थो वाच्यविशेषो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः सः काव्यविशेषो ध्वनिः। आश्रयभेदात् ध्वनेरलङ्कारेषु अन्तर्भावोऽसम्भवः। ध्वनौ व्यङ्ग्यापेक्षया वाच्यवाचकयोरुपसर्जनत्वं भवति। गुणीभूतव्यङ्ग्ये समासोक्त्यादौ तु व्यङ्ग्यस्योपसर्जनत्वाद् वाच्यस्यैव प्राधान्यात्तदभावः। एवमेवाक्षेपादावपि ध्वनेरन्तर्भावोऽसम्भवः। अत एवोक्तम्—

'ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः'॥

स चासौ अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विधा। उक्तप्रकारोऽयं ध्वनिः भक्त्या भक्तेरेकत्वं ताद्रूप्यं भक्त्या सह वा ताद्रूप्यं न बिभर्ति भिन्नरूपत्वात्। भक्तिस्तूपचारमात्रम्। अतिव्याप्तेरव्याप्तेश्च भक्त्या ध्वनिर्न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्यते । अन्यो ध्वनिरन्या च गुणवृत्तिः । अतिव्याप्त्यव्याप्तिदोषापाताद् भक्तिर्ध्वनेर्लक्षणं नास्ति ।

## ( ४ ) काव्यभेदाः

काव्यं द्विविधम्—लौकिकं वैदिकं च । वैदिकं वेदब्राह्मणादिः ईश्वरप्रोक्तम् । लौकिकं तु नीरन्ध्रितबुद्धिधारयाऽऽप्तजनैरवलोकितं रामायणमहाभारतादिः । गद्यपद्यविभेदेन तच्चतुर्धा । यथोक्तम्—

'वैदिकं लौकिकं चेति द्विविधं काव्यमुच्यते ।
गद्यपद्यविभेदेन तच्चतुर्धा व्यवस्थितम् ॥'

गद्यमपि त्रिप्रकारकं भवति—वृत्तगन्धिचूर्णमुत्कलिकाप्रायञ्च । पद्यकाव्यमपि त्रिविधम्—उत्तममध्यमाधमभेदात् ।

**उत्तमकाव्यम्**—उत्तमं काव्यं परिभाषयन् लिखति तत्रभवान् मम्मटः काव्यप्रकाशे—

'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः इदं पदमत्र काव्यपदपरामर्शकं प्रकृतविषयत्वात् । बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य' । यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

अत्र तदन्तिकमेव रन्तुं गतासीति व्यङ्ग्यो वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् इति वाच्यापेक्षयाऽधिकातिशायी ।

नन्वत्र विपरीतलक्षणैव न व्यङ्ग्यम् इति केचित् । किन्तु बाधाभावान्नात्र लक्षणा । अत्र तु अधमपदार्थपर्यालोचनया व्यङ्ग्यं प्रतीयत एव । तस्मात् 'साहेन्ती' इत्यादौ यदि व्यञ्जना तदा लक्षणामूलैव । वापीं स्नातुमित्यादौ तु न नियमः ।

**मध्यमकाव्यम्**—अतादृशि वाच्यादनतिशायिनि व्यङ्ग्ये सति मध्यमं काव्यमुच्यते शास्त्रकारैरिति तत्रभवान् मम्मटः । यथा—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्। यत्र व्यङ्ग्यापेक्षया वाच्यस्यैव चमत्कारिता यत्र वा व्यङ्ग्यं गुणीभूतं विलोक्यते तदुच्यते मध्यमं काव्यम्।' यथा—

'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥'

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतम्। तदपेक्षया वाच्यस्यैव चमत्कारित्वादस्य मध्यमकाव्यता। यतो ह्यत्र व्यङ्ग्येन सङ्केतभङ्गेन वाच्यमुखमालिन्यातिशयरूपानुभावमुखेनैव विप्रलम्भाभासपोषणं न केवलेन सङ्केतभङ्गस्याकर्तव्यत्वबुद्धयाऽपि सम्भवादिति तदनतिशायित्वं व्यङ्ग्यस्य।

**अधमकाव्यम्**—अधमकाव्यं परिभाषयन् लिखति काव्यप्रकाशकारः—

'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्'।

चित्रमिति गुणालङ्कारयुक्तम्, न तु रसादिरूपः। अव्यङ्ग्यमिति स्फुट-प्रतीयमानार्थरहितम् अवरमधमं काव्यमुच्यते। यथा—

'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन् मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्॥'

शब्दचित्रस्योदाहरणमिदम्। वृत्त्यानुप्रासोऽत्र शब्दालङ्कारः। ननु कथमेतद-व्यङ्ग्यमुच्यते? मन्दाकिनीविषयायाः प्रीतेरभिव्यक्तेः? किञ्च नास्त्येव स काव्यार्थो यस्य न व्यञ्जकत्वमन्ततो विभावत्वेनापीति चेत्सत्यम्। किन्तु तद-व्यङ्ग्यमस्फुटतरम्। यद्वा तत्र न कवेस्तात्पर्यम्। अनुप्रासमात्र एव तस्य सम्भवात्। तात्पर्यविषयीभूतव्यङ्ग्यविरहत्वमेव चाव्यङ्ग्यपदेन विवक्षितम्। यदुक्तं ध्वनिकृता—

'रसभावादि विषयविवक्षा विरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः'॥ इति।

अर्थचित्रं च ( वाच्यचित्रं वा )—

'विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयाऽपि यम्।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती'॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतान्तरोपस्थापनम्—

( १ ) साहित्यदर्पणकारः श्रीविश्वनाथमते काव्यं द्विविधम्—१. ध्वनिः, २. गुणीभूतव्यङ्ग्यञ्च । यथोक्तं चतुर्थपरिच्छेदे—

'काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्विधा मतम् ।'

तत्रोत्तमध्वनिकाव्यस्वरूपं निरूपयन्नाह—

'वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम् ।'

वाच्यापेक्षयाधिकचमत्कारिणि व्यङ्ग्ये ध्वनिर्नामोत्तमं काव्यं भवति । इदं तु द्विधा—

'भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥'

अविवक्षितवाच्यस्य द्वौ भेदौ—१. अर्थान्तरसङ्क्रमितवाच्यः, २. अत्यन्ततिरस्कृतवाच्यश्च । विवक्षितान्यपरवाच्योऽपि द्विविधः—१. असंलक्ष्यक्रमव्यङ्ग्यः, २. संलक्ष्यक्रमव्यङ्ग्यश्च । आद्योऽसंलक्ष्यक्रमव्यङ्ग्यः रसभावादिरेक एवात्र गण्यतेऽलङ्कारशास्त्रे । द्वितीयः संलक्ष्यक्रमश्च त्रिविधः—१. शब्दशक्त्युद्भवः, २. अर्थशक्त्युद्भवः ३. शब्दार्थोभयशक्त्युद्भवश्च ।

( २ ) ध्वनिकारमते ध्वनिर्द्विविधः—१. अविवक्षितवाच्यः, २. विवक्षितान्यपरवाच्यश्च । तत्राद्यस्य द्वौ भेदौ—१. अर्थान्तरसङ्क्रमितवाच्यः, २. अत्यन्ततिरस्कृतवाच्यश्चः । द्वितीयोऽपि द्विधा—१. असंलक्ष्यक्रमव्यङ्ग्यः, २. संलक्ष्यक्रमव्यङ्ग्यश्च । यथोक्तम्—

'अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥
असंलक्ष्यक्रमोद्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥'

सर्वमेव विषयप्रपञ्चमुपदर्शितेष्वेव भेदोपभेदेषु गतप्रायमिति मत्वा विरम्यते ।

## ( ५ ) साहित्ये वाक्यस्वरूपम्

संस्कृतसाहित्ये वाक्यस्य किं स्वरूपमिति निरूपणमेव विषयपरिधिः रस्माकं निबन्धस्य । पदानां समूह एव वाक्यमिति बहवः । संस्कृतसाहित्यस्य


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मान्यो विद्वान् तत्रभवान् विश्वनाथमहापात्रः सान्धिविग्रहिकः स्वीये साहित्य-दर्पणनामके ग्रन्थे द्वितीयपरिच्छेदे लिखति—

'वाक्यं स्याद् योग्यताकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः ।'

पदार्थानामभिधादिद्वारा पदप्रतिपाद्यानामर्थानां परस्परसम्बन्धे विवक्षित-परस्परान्वयबोधे बाधस्य विपरीतबुद्धेरभावः प्रतिबन्धकाभावः योग्यता कथिता । इत्थं 'पयसा सिञ्चति' इत्यत्र सेचनक्रियायां पयःकरणकत्वाभाववान् सेकः इत्यादिविपरीतबुद्धेरभावात् सेचनक्रियायां पयःकरणकत्वरूपसम्बन्धविषये पयसि सेचनकार्यकत्वसम्बन्धविषये च लक्षणसङ्गतिर्भवति । परन्तु 'अग्निना सिञ्चति' इत्यत्र न भवति वाक्यत्वम् । सेचनक्रियायां वह्निकरणकत्वसम्बन्ध-विषये सेको वह्निकरणकत्वाभाववान् इत्यादि विपरीतबुद्धेः सत्त्वात् योग्यता-भावाच्च । प्रतीतेः पदजन्यपदार्थोपस्थितेः पर्यवसानस्य अन्वयबोधजनकत्वे-नाभिलाषारहितस्य विरहः अभाव एव आकाङ्क्षा । स च प्रतीतिपर्यवसान-विरहश्च श्रवणकर्तुरन्वयितपदान्तरबोधेच्छास्वभावः । एवं श्रवणकर्तुर्य-त्किञ्चित्पदश्रवणानन्तरमेव तदन्वयि पदान्तरस्य पुनः श्रवणेच्छैवाकाङ्क्षेति फलितार्थः । 'पयसा सिञ्चति' इत्यत्र श्रवणकर्तुः पयसेति पदश्रवणानन्तरमेव सिञ्चति इति पदान्तरस्य साध्यत्वेन श्रवणेच्छा तथा च सिञ्चति इति पदश्रवणोत्तरं पयसेति पदान्तरस्य च साधकत्वेन भवति श्रवणेच्छेति निष्कर्षः । आकाङ्क्षारहितपदसमूहवाक्यत्वे स्वीकृते तु गौरश्वः, पुरुषो हस्तीत्यादिपदाना-मपि वाक्यता । तथात्वे चातिव्याप्तिः ।

आसत्तिस्तु बुद्ध्यविच्छेदः । बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चरितेन गच्छतीति पदेन सङ्गतिः स्यात् । अत्राकाङ्क्षायोग्यतयोरामार्थधर्मत्वेऽपि पदोच्चयधर्मत्वमुपचारात् । तथा च आकाङ्क्षाया उत्थापकत्वनिवर्तकत्वान्यतरसम्बन्धेन पदोच्चयनिष्ठत्वं योग्यतायाश्च स्वाश्रयोपस्थापकत्वसम्बन्धेन पदोच्चयनिष्ठत्वम् । आसत्तेस्तु विषयतासम्बन्धेन पदोच्चयनिष्ठत्वं स्वत एव ।

ननु पदस्य का परिभाषा ? इति जिज्ञासायां पदलक्षणं निरूपयन्नाह—

'वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ।'

प्रयोगार्हत्वं नाम वाक्यान्तरनिवेशयोग्यत्वम् । तत्तु कुत्रचित् सुबन्तत्वेना-ख्यातत्वेन वा लुगन्तत्वेन । अनन्वितत्वं तु अपर्यवसितान्वयत्वम् । अनन्वितमेक-मर्थं बोधयन्तीति अन्वितैकार्थबोधकाः । वर्णाश्च स्वरव्यञ्जनरूपाः । इत्थं प्रयोगार्हत्वे सति अनन्वितान्वयैकार्थबोधकवर्णत्वं पदत्वमिति वक्तुराशयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा—घटः। प्रातिपदिकस्य विभक्तिरहितनाम्नः केवलस्य तस्याप्रयोगात्। एतेन तादृशा धातवोऽपि प्रोक्ताः। तस्यापि केवलस्याप्रयोगदर्शनात्। यथा च तत्रभवान् महाभाष्यकारः—

'न केवला प्रकृतिः प्रयोक्तव्या नाऽपि केवलः प्रत्ययः।'

एतादृशानां पदानां समूहः वाक्यमिति निष्कर्षः। एतादृशानां च वाक्यानां समूहो महावाक्यमिति तत्रभवान् विश्वनाथः—

'वाक्योच्चयो महावाक्यम्।'

योग्यताऽऽकाङ्क्षाऽऽसत्तिमत्त्वे सति वाक्योच्चयत्वं महावाक्यत्वमिति वक्तुराशयः। अन्यथा योग्यताऽऽकाङ्क्षाऽऽसत्तिमत्वरहितयोः बधिरो बभूव देवदत्तः, स शास्त्रं शृणोति, घटं करोति, शय्यायां शेते, चक्षुषा गृह्यताम्, नदी प्रवहति, इत्यादिवाक्ययोरपि महावाक्यत्वप्रसङ्गः। स्वं स्वमर्थं प्रत्याय्य विश्रान्तिमुपगतानां वाक्यानां वाक्यान्तरेषु आकाङ्क्षारहितत्वेन न महावाक्यत्वम्, असम्भवदोषादिति चेत् शृणु—

'स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहृत्य जायते॥'

इति प्राचीनानामादेशम्। अत एव स्वीकर्तव्यमेव वाक्यत्वं महावाक्यत्वं च। तत्र वाक्यस्योदाहरणमस्ति—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीम्
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥'

महावाक्यस्य तु रामायण-महाभारत-रघुवंशादिः।

## ( ६ ) शब्दार्थः

श्रोत्रग्राह्यो ध्वनिः शब्दः। स च द्विविधः—निरर्थकः सार्थकश्च। निरर्थको यथा—करतलसंयोगजन्यः। सार्थकश्च त्रिविधः—( १ ) वाचकः, ( २ ) लाक्षणिकः, ( ३ ) व्यञ्जकश्च। उपाधीनां त्रैविध्यात्। यथा च तत्रभवान् मम्मटः काव्यप्रकाशस्य द्वितीये उल्लासे लिखति—

'स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र काव्ये शब्दस्त्रिधा मतः । वाचको लाक्षणिको व्यञ्जकश्च । एतेषामर्थोऽपि त्रिधा भवति—वाच्यो लक्ष्यो व्यङ्ग्यश्च । योऽभिधत्ते स वाचकः इति परिभाषाबलात् अभिधया बोध्योऽर्थो वाच्य इत्युच्यते । पदप्रतिपाद्यत्वमर्थत्वमिति सर्ववादिसम्मतिः विप्रतिपत्तेरभावात् । अत एव पदप्रतिपाद्योऽर्थो वाच्य इति फलितार्थः । पदलक्षितोऽर्थो लक्ष्यः । पदव्यञ्जितोऽर्थो व्यङ्ग्य इति निष्कर्षः । सर्वं सङ्क्षिपन् वदति मम्मटः—

'वाच्यादयस्तदर्थाः स्युः ।'

सान्धिविग्रहिको विश्वनाथमहापात्रोऽपि लिखति साहित्यदर्पणस्य द्वितीये परिच्छेदे—

'अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ।'

आलङ्कारिकाणां या शक्तिः सैव तार्किकादीनां वृत्तिः । शब्दस्य च प्रकृतिप्रत्ययादेः शक्तयः अर्थबोधे सहकारिवृत्तयः । यथा च तत्रभवतो विश्वनाथस्यैवोक्तिः—

'वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥'

## ( ७ ) अभिधा

तिसृषु शक्तिषु मध्ये सङ्केतितार्थस्य बोधनादग्रिमा प्रोक्ताऽभिधा । सङ्केतं च निरूपयन् वदति तत्रभवान् गदाधरभट्टः शक्तिपादे—'इदं पदमिममर्थं बोधयत्विति अस्मात् पदादयमर्थो बोद्धव्य इति वेच्छा सङ्केतरूपा वृत्तिः ।' अथ च वक्ता पटपदं तन्वादिमन्तमर्थं बोधयतु इति इच्छया तथाविधार्थं निर्दिश्य प्रयुक्तं तत्पदं तादृशमेवार्थं च बोधयति । मीमांसकादिमते तु सङ्केतः स्वाभाविको व्यापारः । सङ्केतितार्थोऽयं कथमपि मुख्यार्थान्नातिरिच्यते । मुख्यत्वं नाम प्रथमोपस्थापितत्वं लक्ष्यव्यङ्ग्यापेक्षयाऽर्थस्य । एवं मुख्यार्थबोधकशक्तित्वमभिधात्वमिति पर्यवसितार्थः ।

सङ्केतग्रहस्तु वृद्धव्यवहारादिति मीमांसकनयः । यथा चोक्तम्—

'सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः ।
पश्चादेवोपमानाद्यैः शक्तिर्धीपूर्वकैरसौ ॥'

अन्यदप्युक्तम्—

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सङ्केतोऽयं कुत्र ? जातौ व्यक्तौ वा ? यतो हि सङ्केत एव अभिधा-प्राणप्रदः । उक्तं हि मम्मटेन—

'साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ।'

स एवोत्तरयन्नाह—यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाप्यानन्त्यात् व्यभिचाराच्च तत्र सङ्केतं कर्तुं न युज्यते । अत एव तदुपाधावेव सङ्केतः । विश्वनाथोऽपि समर्थयति तथ्यममुमेव—

'सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ।'

निगमयति च वृत्तौ—एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते, न व्यक्तौ आनन्त्यव्यभिचारदोषपातात् । उपाधिरपि द्विविधः—( १ ) वस्तुधर्मः ( २ ) वक्तृयदृच्छासन्निवेशितश्च । वस्तुधर्मोऽपि द्विविधः—( १ ) सिद्धः, ( २ ) साध्यश्च । सिद्धोऽपि द्विविधः—पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । तत्राद्यो जातिः । उक्तं हि वाक्यपदीये—'न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाऽभिसम्बन्धात्तु गौः द्वितीयो गुणः । साध्यः पूर्वापरीभूतावयवः क्रियारूपः । अत एव सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तम् । अथ च साक्षात्सङ्केतित एवार्थो मुख्यत्वेन प्रसिद्ध इति फलितार्थमाह—

'स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ।'

किंतु व्यक्तौ जातौ जातिविशिष्टादौ च सङ्केतग्रहः कष्टसाध्य एव । उपाधावेव सङ्केतग्रहो निर्बाध इति तर्कधुरन्धरविद्वद्विचारसारः ।

## ( क ) तात्पर्यार्थोऽपि केषुचित्

वाग्देवतावतारः जैयटपुत्रो मम्मटः काव्यप्रकाशस्य द्वितीये उल्लासे लिखति कारिकांशमिमम्—तत्र भाट्टमतनाम्ना ख्यातानां कुमारिलभट्टादिमीमांसकानां मतं समर्थयन् गुरुमतनाम्ना प्रसिद्धानां प्रभाकरमतपोषकाणां मीमांसकानां मतं खण्डयन् वदति काव्यप्रकाशकारः कारिकाभागमिमम् यस्यायमभिप्रायः—'तात्पर्यार्थोऽपि तात्पर्याख्यवृत्तिप्रतिपादितोऽर्थविशेषोऽपि केषुचित् अभिहितान्वयवादिनां मते स्वीकृतोऽस्माभिरपि स्वीक्रियत इति शेषः ।'

आकाङ्क्षायोग्यतासन्निधिवशात् पदार्थानां समन्वये जाते विशेषशरीरस्तात्पर्यार्थो विलसति । पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वं हि आकाङ्क्षा । अर्थाऽबाधो योग्यता । अविलम्बेनोच्चारणं सन्निधिः । आकाङ्क्षा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रहितवाक्यस्य प्रामाणिकता दूरापेता। यथा गौरश्वः, पुरुषो हस्तीत्यादि। योग्यतारहितस्यापि पदस्य प्रामाणिकताऽसिद्धैव। यथा—वह्निना सिञ्चति इत्यादिरूपा। सन्निधिरहितानि विलम्बेनोच्चारितानि पदान्यपि प्रमाणयोग्यानि न भवन्ति। अत एव आकाङ्क्षायोग्यतासन्निधिवशात् पदार्थानां परस्परसम्बन्धे विवक्षिते तात्पर्याख्यवृत्तिबोध्यो वाच्यलक्ष्यव्यङ्ग्यार्थापेक्षया विलक्षणवपुः प्रत्येकपदवृत्त्यविषयो वाक्यार्थो यात्यनुभवविषयतामिति मतमस्ति मीमांसकानामभिहितान्वयवादिनाम्। अभिहितानां स्वस्ववृत्त्या पदैरुपस्थापितानामर्थानामन्वय इति वादिनां मतम्।

पदसमूहगम्यो वाक्यार्थः। यथोक्तं साहित्यदर्पणे विश्वनाथमहापात्रमहोदयैः—

'वाक्यं स्याद् योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः।'

स च वाच्यान्तर्गतपदार्थ एव इत्यन्विताभिधानवादिनः प्रभाकराद्याः मीमांसकाः। देवदत्त! गामानयं इत्याद्युत्तमवृद्धप्रयुक्ते तादृशव्यक्तिसञ्चारे मध्यमवृद्धस्य प्रवृत्तिं परिलक्ष्य जिज्ञासुर्बालकः तस्य वाक्यस्य तदर्थबोधकताऽनुमानं कृत्वा गां नय अश्वमाहरेति अनन्तरवाक्यप्रयोगात् गवापसारेऽश्वाहरणे च प्रवृत्तिं दृष्ट्वा अन्वयव्यतिरेकाभ्यां कारकपदस्य क्रियापदार्थान्विते कारके क्रियापदस्य कारकपदार्थान्वितायां क्रियायां च जानाति शक्तिम्। तदनन्तरं प्रयोगकाले तस्य बालकस्य प्रथमत एव अन्वितबुद्धिर्जायते। अतोऽभिधावृत्तिमाध्यमेनैव कार्ये सिद्धे तात्पर्याख्यवृत्त्यन्तरस्वीकरणेन को लाभः? किन्तु विचारसङ्गतं मतमिदं नास्ति। सामान्यार्थबोधिकाभिधाऽन्वयरूपविशेषार्थबोधिकां तात्पर्याख्यां निराकर्तुमक्षमा परस्परान्वयरूपविशेषार्थबोधाभावात्। साहित्यशास्त्रे च तात्पर्या वृत्तिः स्वीकृतेति सिद्धान्तसारः।

नैयायिकानां मते व्यङ्ग्यार्थबोधो भवत्यनुमानेन। भाट्टमतानुयायिनां मीमांसकानां मते दीर्घदीर्घतरव्यापाररूपा अभिधा एव व्यङ्ग्यार्थं बोधयति। अभिहितान्वयवादिनां मीमांसकानां मते संसर्गबोधिका तात्पर्या वृत्तिरेव व्यङ्ग्यार्थं व्यनक्ति। भट्टनायकादिसांख्यानां मते अभिधैव व्यञ्जनाकार्यसञ्चालिका। वैयाकरणानामालङ्कारिकाणां मते तु व्यञ्जनावृत्तिं विना व्यङ्ग्यार्थबोधो दूरापेत इति सर्वः पक्षविपक्षसारः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ( ख ) सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधा व्यापारः

( सम्पू० सं० वि० वि० १९७८ )

अप्रतिमप्रतिभाशाली तत्रभवान् मम्मटः काव्यप्रकाशस्य पञ्चमे उल्लासे व्यञ्जनाविच्छेदाय वद्धपरिकराणां भट्टलोल्लटादीनां मतमुपस्थापयति खण्डनाय। ये त्वभिदधति—'सोऽयमिषोरिव दीर्घदीर्घतरो ( अभिधा ) व्यापार इति यत्परः शब्दः स शब्दार्थं इति च विधिरेवात्र वाच्य इति—तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानां प्रियाः।'

यथा बलवता प्रेरितः एक एव इषुरेकेन वेगाख्येन व्यापारेण शत्रोर्वर्मच्छेदं मर्मच्छेदं प्राणहरणं च करोति, तथैव सुकविप्रयुक्तः एकः शब्द एव एकेन अभिधानामकेन व्यापारेण पदार्थोपस्थितिम् अन्वयबोधं व्यङ्ग्यप्रतीतिञ्च जनयति। अत एव व्यङ्ग्यार्थोऽपि वाच्यार्थ एव नेतरः। एकार्थबोधोत्तरं शब्दो विरमति इति तु न वाच्यम्, विवक्षितार्थबोधोत्तरमेव विरामस्वीकारात्। अपि च यत् तात्पर्येण शब्दः प्रयुज्यते स शब्दार्थ इत्यर्थकेन यत्परः शब्दः स शब्दार्थ इति न्यायेन चात्र 'निःशेषच्युतचन्दनं स्तनतटमि'त्यादौ नायकान्तिकगमनरूपविधिः तात्पर्यविषयतया वाच्य एव न च व्यङ्ग्य इति।

परन्तु मतमिदमसङ्गतम्। 'यत्परः शब्दः स शब्दार्थः' इत्यादिनियमस्य मीमांसकवरैरित्थमर्थो निरणायि—वाक्यान्तरवर्तिपदार्थेषूपस्थितेषु सिद्धरूपाणां प्राप्तनया विधानमनर्थकम् इति साध्यरूपस्यैव विधेयत्वम्। तत्रैव तद्वाक्यस्य तात्पर्यम्। यस्मिंश्च तात्पर्यं स एव वाक्यार्थस्तदर्थबोधनाय एव तद् वाक्यं प्रयुक्तम्। तदंशस्य प्रमाणान्तराप्राप्ततया तदंशे एव तद्वाक्यस्यानवगतार्थबोधकत्वेन प्रामाण्यनिर्वाह इति तात्पर्यमिदमजानन्त एव मूर्खाः। तथा हि—भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिवर्तकस्वक्रियाभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति। ततश्च दग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते। यथा—ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं हवनस्यान्यतः सिद्धे दध्ना जुहोति इत्यादौ दध्यादेः कारणत्वमात्रं विधेयम्। यथा च ग्रन्थकारः—भूतं सिद्धम्। भव्यं साध्यम्। तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यत इति। कारकपदार्थाः क्रियापदार्थेनानीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया साध्यीभूतया स्वक्रियया योगात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साध्यायमानतामाप्नुवन्ति। स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति। ततश्च यथा दहनेनादग्धमात्रं दह्यते न तु दग्धमपि तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते न तु प्राप्तमपि। यथा ऋत्विक्प्रचरणेऽन्यतः प्राप्ते 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इत्यनेन लोहितोष्णीषत्वमात्रं विधीयते न तु ऋत्विक्प्रचरणम्। उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्। हवनस्यान्यतः सिद्धौ च 'दध्ना जुहोति' इत्यनेन दध्नः करणत्वं न तु दधि हवनं वा।

क्वचिदुभयविधिः। क्वचित्त्रिविधिरपि। यथा—'रक्तं पटं वयः' इत्यादौ एकविधिः द्विविधिः त्रिविधिः वा। ततश्च यदेव विधेयं तत्रैव तात्पर्यम् इत्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे। एवं हि पूर्वो धावति इत्यादौ अपराद्यर्थेऽपि क्वचित् तात्पर्यं स्यात्।

यत्तु 'विषं भक्षय मा चास्य गृहे भुङ्क्था' इत्यत्र एतद् गृहे न भोक्तव्यमिति यत्र तात्पर्यमिति स एव वाक्यार्थं इति उच्यते—तत्र चकार एकवाक्यतासूचनार्थः। न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्था इत्युपात्त शब्दार्थे एव तात्पर्यम्।

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारस्ततः कथं ब्राह्मणपुत्रस्ते जातो, ब्राह्मणकन्या ते गर्भिणी इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्? कस्माल्लक्षणा? लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः। किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वम्। इत्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम्।

एवं पूर्वोक्त इषुदृष्टान्तो वैषम्यादनुपपन्नः। तथा हि—तत्र वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घतरत्वं सम्भवति। अभिधायास्तु ज्ञाताया एवानुकूलत्वाद् व्यङ्ग्यनिष्ठतया चाज्ञानादिति अन्विताभिधानवादेऽपि 'निःशेष०' इत्यादौ विधेर्व्यङ्ग्यत्वमेवेति स्थितम्। किं च यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्यत इत्यन्विताभिधानं तदाऽवश्यं व्यञ्जना स्वीकर्तव्या। अन्यथा रुचिं कुरु इत्यादिशब्दस्य दुष्टत्वं न स्यात्। दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात्। तदर्थस्यान्यान्वितत्वात्। किं च वाच्यवाचकभावातिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्ट्याऽपि स्वीकर्तव्यम्। अन्यथा कष्टत्वादयोऽनित्यदोषा असाधुत्वादयो नित्यदोषा इति विभागो न स्यात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच्यस्याविशेषेण कष्टादीनामपि सर्वत्र दुष्टत्वस्यादुष्टत्वस्य वा प्रसङ्गात्। व्यञ्जनाऽभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादौ व्यङ्ग्येऽनुकूलत्वं शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभागव्यवस्था। अत एव व्यञ्जना-निरासाय दीर्घदीर्घतराभिधाव्यापारकल्पनं निरर्थकमेव।

## (८) लक्षणा

अथवा

## लक्षणारोपितक्रिया

अथवा

## लक्षणा तेन षड्विधा

सूक्ष्मेक्षिकया लक्षणां निरूपयन् वदति तत्रभवान् मम्मटः काव्यप्रकाशस्य 'द्वितीये उल्लासे—

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपितक्रिया॥'

वाच्यार्थस्य वक्तुस्तात्पर्याऽविषयत्वे तस्य बाधितमुख्यार्थस्य साक्षात्सम्बन्धे रूढितः प्रसिद्धप्रयोगात् शैत्यपावनत्वादिरूपात् प्रयोजनाद्वा यया वृत्त्या अन्योऽर्थः मुख्यार्थभिन्नतटादिरूपोऽर्थो लक्ष्यते सा वृत्तिरेव लक्षणा प्रोक्ता। सा हि आरोपिता कल्पिता क्रिया व्यापाररूपा इत्यर्थः। अत्र प्रतिपादितं लक्षणालक्षणं वर्तते यथाऽन्योऽर्थो लक्ष्यते सा लक्षणा। मुख्यार्थबाधः रूढिः प्रयोजनं चेति त्रयं लक्षणायाः हेतुः। अत्र मुख्यार्थबाधतद्योगयोर्दण्डचक्रादिन्यायेन रूढि-प्रयोजनयोश्च तृणारणिमणिन्यायेन कारणता भवतीति विशेषः।

लक्ष्यते इत्यस्यार्थोऽस्ति प्रतिपाद्यते इति। अन्यथा अन्योऽन्याश्रयापत्तिः। 'भद्रात्मनो' इत्यादावतिव्याप्तिवारणाय मुख्यार्थबाधे इति। अन्यथाऽप्रस्तुतार्थस्य लक्ष्यत्वमेवापद्यते। सामीप्यादिभोगाभावे लक्षणास्वीकृतौ गङ्गापदात् यमुना-तटस्यापि उपस्थितिसम्भावना। तद्वारणाय एवोक्तं तद्योगे इति। रूढि-प्रयोजनाभावे लक्षणास्वीकारे रूपवान् घटः इत्यर्थे रूपो घटः इत्यादि प्रयोगा-पत्तिः। अतस्तन्निवारणाय एवोक्तं—'रूढितोऽथ प्रयोजनादि'ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्तुस्तात्पर्यस्यानुपपत्तिरेव लक्षणायां हेतुः न च अन्वयानुपपत्तिः। अन्यथा न स्याल्लक्षणा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र दध्युपघातके। रूढौ लक्षणा यथा—कर्मणि कुशलः, कुशान् लाति आदत्ते गृह्णाति इति व्युत्पत्ति-निष्पन्नं कुशलपदं कुशाहरणकारिणे शक्तम्। किन्त्वत्र कर्मणि चित्रकर्मणि कुश-ग्रहणायोगात् मुख्यार्थबाधे विवेचकतासम्बन्धेन रूढया दक्षरूपमर्थं लक्षयति। अतश्चित्रकर्मणि दक्ष इति अर्थबोधो भवति।

दक्षरूपार्थं एव मुख्यार्थं इति साहित्यदर्पणकारो विश्वनाथः। तन्मते अन्यत् हि शब्दानां व्युत्पत्तिनिमित्तम् अन्यच्च प्रवृत्तिनिमित्तम्। अतो व्युत्पत्ति-लभ्योऽर्थ एव मुख्यार्थ इति स्वीकरणं नोचितम्। तथात्वे 'गौः शेते' इत्यत्रापि लक्षणा स्यात्। 'गमेर्डोः' इति सूत्रेण डो प्रत्यये कृते निष्पन्नस्य गोशब्दस्य शयनकालेऽप्रयोगात्।

उद्योतकारमते तैलमानय इति रूढेरुदाहरणम्। प्रयोजने लक्षणा यथा—गङ्गायां घोषः। अत्र गङ्गापदस्य प्रवाहरूपोऽर्थः मुख्यार्थः। तदेव घोषाधारा-सम्भवात् मुख्यार्थबाधे सति सामीप्यसम्बन्धात् तटं लक्षयति। शैत्यपावनत्वादीनां प्रतिपादनमेवाऽत्र प्रयोजनम्।

लक्षणेयम् उपादानलक्षणा-लक्षणलक्षणारूपाभ्याम् उपाधिभ्यां द्विविधा भवति। यथा च ग्रन्थकारः—

> 'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
> उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा॥'

स्वस्य शक्यार्थस्य अन्वयसिद्धये पराक्षेप अशक्यार्थद्योतनम् उपादान-लक्षणा। यथा—कुन्ताः प्रविशन्ति। अत्र कुन्तानामचेतनत्वात् प्रवेशक्रियाया-मन्वयासम्भवात् मुख्यार्थबाधः। अतः कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्व-संयोगिनः पुरुषाः आक्षिप्यन्ते। हेतुनाऽनेन स्वार्थत्यागपूर्वकपरार्थग्रहणेनात्र उपा-दानलक्षणा। तैक्ष्ण्यस्य वाहुल्यस्य वा द्योतनं प्रयोजनम्।

परस्य अशक्यस्य तीरादेः अन्वयबोधार्थं स्वस्य शक्यार्थस्य समर्पणं त्यागः लक्षणलक्षणा उच्यते। यथा—गङ्गायां घोषः। अत्र घोषाधारत्वान्वयसिद्धये गङ्गाशब्दः प्रवाहरूपं मुख्यार्थं त्यजति। अत एव स्वार्थार्पणेनोपलक्षिता लक्षणा एव लक्षणलक्षणा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौणीभेदौ लक्षयन्नेव विभजते काव्यप्रकाशकारः—

'सारोपान्या तु यत्रोक्तौ विषयीविषयस्तथा ।
विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात् साध्यावसानिका' ॥

विषयी आरोप्यमाणो गवादिः, विषयः आरोपस्याश्रयो वाहीकादिः । यत्र यादृशस्थले तथा तेनैव गोत्ववाहीकत्वादिरूपधर्मप्रकारेण उक्तौ सामानाधिकरण्येन शब्दप्रतिपाद्यौ भवतः सा अन्या शुद्धा गौणी च सारोपा सारोपालक्षणा इति । यथा—गौर्वाहीकः । अत्र विषयी गवादिर्विषयः वाहीकादिश्च यत्र स्वस्वधर्मप्रकारेण निर्दिश्येते । अत एवेयं सारोपालक्षणा ।

विषयिणा आरोप्यमाणेन अन्यस्मिन् आरोपविषयेऽन्तःकृते निगीर्णे सा साध्यवसाना प्रोक्ता । यथा—गौरयम् । अत्र आरोपविषये आरोपाश्रये विषयिणा आरोप्यमाणेन निगीर्णे साध्यवसानलक्षणा । वाहीकस्य अज्ञत्वातिशयबोधनरूप एव प्रयोजनम् ।

एतौ भेदौ शुद्धभेदेऽपि भवत इति प्रतिपादयन्नेव शुद्धायाः गौण्याश्च लक्षणमाह तत्रभवान् मम्मटः—

'भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा' ॥

सारोपासाध्यवसानारूपौ भेदौ विशेषौ सादृश्यात् सादृश्याख्यसम्बन्धात् गौणौ गौणशब्दवाच्यौ । तथा सम्बन्धान्तरतः सादृश्येतरसम्बन्धात् शुद्धौ विज्ञेयौ । शुद्धागौणीसारोपासाध्यवसानोपादानलक्षणैर्लक्षणाया षड्भेदाः भवन्ति ।

आयुर्घृतमिति शुद्धसारोपाया उदाहरणम् । अत्र आयुर्जनकत्वात् घृतमायुः शब्देन लक्ष्यते । जन्यजनकभावोऽत्र सम्बन्धः । तयोश्च लक्षणया अभेदः । अत एव आयुर्भिन्नं घृतमिति शाब्दबोधः ।

आयुरेवेदमिति शुद्धसाध्यवसानाया उदाहरणम् । अत्र इदं पदेन घृतादेरुपस्थितिः । एवमेव आयुः पीयते इत्यपि उदाहरणान्तरम् उभयत्र कार्यकारित्वं प्रयोजनम् । अधोलिखितचित्रेण भेदबोधे स्पष्टता भविष्यति । उदाहरणान्यपि स्पष्टावगमाय लिख्यन्ते—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri




व्यञ्जनकृतं प्रकारत्रयमपि दृश्यते लक्षणायाः। यथा तत्रैव—

'व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।
तच्च गूढमगूढं वा तदेषा कथिता त्रिधा॥'

व्यङ्ग्यस्य गूढागूढत्वेन इयं षड्विधा लक्षणा द्वादशविधा भवति। व्यङ्ग्य-रहिता रूढिलक्षणा चैका। साकल्येनेयं त्रयोदशविधा। मुखं विकसितस्मितम् इत्यादि गूढव्यङ्ग्यायाः उपदिशति कामिनीनां यौवनमद एव ललितानि इत्यादि चागूढव्यङ्ग्यायाः सदुदाहरणम्। निरूढाभेदाष्टकं जहत्स्वार्थादिकञ्च विश्वनाथप्रपञ्चमनुचितत्वात् त्याज्यमेव।

## (९) व्यञ्जना

अथवा

## व्यञ्जनान्नापरा क्रिया

ननु गङ्गायां घोष इत्यादौ तीरादौ यथा लक्षणा भवति तथैव शैत्यादाव-प्यस्तु किं व्यञ्जनया चेत्? न, हेत्वाभावान्न लक्षणा। मुख्यार्थबाधरूढि-प्रयोजनरूपहेतुत्रयाभावान्नात्र लक्षणा सम्भवा। ननु हेतुत्रयाभावेऽपि लक्षणा भवतु। नोचितमेतत्। न च शब्दः लाक्षणिकशब्दः स्खलद्गतिः प्रच्युतबोधकता-रूपसामर्थ्यः। अत एव अभिधया लक्षणया वा शैत्यादिप्रयोजनप्रतीतेर्निर्वाहाभावे व्यञ्जनारूपाऽपरा वृत्तिः स्वीकरणीया एव। यथाह ग्रन्थकारः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया' ॥

प्रयोजनस्य लक्ष्यत्वेऽपि अनवस्थादोषप्रसङ्गः । अत एवोक्तम्—

'एवमप्यनवस्था स्याद् या मूलक्षयकारिणी' ।

अनेन प्रकारेण तु मूलस्यैव विनाशो भविता । किं च लक्षणायां स्वीकृतायां तत्र रूढ्यभावात् प्रयोजनान्तरं वक्तव्यम् । प्रयोजनं लक्ष्यते चेत् तत् प्रयोजनान्तरेण हेतुना । तदपि लक्ष्यते चेत् तदपि प्रयोजनान्तरेणैव । इत्थं प्रयोजनपरम्परया लक्षणास्वीकारप्रयोजनानुसन्धानस्य अपर्यवसानेन प्रस्तुतस्य शैत्यादेः तटादेर्वा बोधानुदयप्रसङ्गः । अत एव प्रयोजनस्य लक्ष्यत्वं सम्भवमेव नास्ति ।

ननु प्रयोजनसहितमेव तटादिकं लक्ष्यते न केवलं प्रयोजनमिति चेत् ? न । लक्षणीयं प्रयोजनीभूतज्ञानविषयपावनत्वादिना सहितं न युज्यते । यथा ज्ञानस्य विषयो ज्ञानादन्यो भवति तथा ज्ञानस्य फलमपि ज्ञानादन्यद् भवति । प्रत्यक्षादेर्नीलादिविषयः फलं च प्रकटता संवित्तिर्वा । यथोक्तम्—

'प्रयोजनेन सहितं लक्षणीयं न युज्यते ।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' ॥

एवमेव विशिष्टे लक्षणा कर्तुं न शक्यते । लक्षिते तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जनध्वनन-द्योतनादिशब्दवाच्यम् अवश्यमेषितव्यं च । इत्थं मुख्यार्थबोधनेऽभिधायामुपक्षीयमाणायां संसर्गार्थबोधने विरतायां तात्पर्यायां तटादिकं लक्ष्यीकृत्य श्रान्तायां लक्षणायां शैत्यपावनत्वादिप्रतीतिलाभाय व्यञ्जना स्वीकार्या एवेति आलङ्कारिकप्रवराणां सिद्धान्तः ।

अथ का व्यञ्जना ? इति जिज्ञासायामुच्यते विद्वद्भिः—मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जनेति । विश्वनाथस्तु परिभाषयति साहित्यदर्पणे व्यञ्जनामित्थम्—

'विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च' ॥

अथवा

'शक्यलक्ष्यातिरिक्तार्थबोधिका वृत्तिर्व्यञ्जना' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इयं व्यञ्जना द्विविधा भवति—१. शाब्दी, २. आर्थी च। शाब्दी व्यञ्जनाऽपि द्विधा भवति—१. अभिधामूला, २. लक्षणामूला च। यथा च विश्वनाथः साहित्यदर्पणस्य द्वितीये परिच्छेदे—

'अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा'।

अभिधामूलां व्यञ्जनां लक्षयति तत्रैव—

'अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया'॥

आदिशब्दात् तु विप्रयोगादयः। यथा चोक्तम्—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥'

संयोगादिना नानार्थकाः शब्दाः एकत्रार्थेऽभिधया नियम्यन्ते—

(क) संयोगः—यथा—सशङ्खचक्रो हरिः। अनेकार्थो हरिशब्दोऽत्र शङ्खचक्रयोगेन विष्णौ नियम्यते।

(ख) विप्रयोगः—प्रसिद्धसम्बन्धाभावः। यथा—अशङ्खचक्रो हरिः। शङ्खादिविभागाभावात् हरिशब्दस्य वाचकताऽनेकार्थत्वेऽपि अच्युते नियम्यते।

(ग) साहचर्यम्—सहचारित्वम्। यथा—रामलक्ष्मणौ इति। अत्रानेकार्थावपि रामलक्ष्मणशब्दौ दाशरथौ नियम्यते साहचर्यबलात्।

(घ) विरोधिता—वैरम्। यथा रामार्जुनगतिस्तयोः अत्र विरोधित्वादेव रामस्य भार्गवेऽर्जुनस्य च कार्तवीर्ये वाचकता नियमिता न च दाशरथौ पाण्डवे वा।

(ङ) अर्थः—प्रयोजनम्। यथा स्थाणुं भज भवच्छिदे। भवच्छेदनरूपफलेनात्र स्थाणुशब्दो नियमितः शिवे।

(च) प्रकरणम्—यथा—सर्वं जानाति देवः। अत्रानेकार्थोऽपि देवशब्दः प्रकरणेन राजनि नियम्यते।

(छ) लिङ्गम्—असाधारणो धर्मः। यथा—कुपितो मकरध्वजः। कोपरूपचेतनधर्मसम्बन्धात् कामे नियमितो मकरध्वजशब्दः।

(ज) शब्दान्यसन्निधिः—यथा देवस्य पुरारातेः। पुरारातिसामीप्यादत्र देवशब्दो शिवे नियम्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( झ ) सामर्थ्यम्—नियतशक्तिः । यथा—मधुना मत्तः कोकिलः इति । अत्र सामर्थ्येन मधोर्वाचकत्वं वसन्ते नियन्त्रितम् ।

( ञ ) औचिती—योग्यता । यथा—पातु वो दयितामुखम् । अत्र उत्कण्ठितमनोरथसाधनौचित्येनानुकूल्ये नियमिता वाचकता मुखस्य ।

( ट ) देशः—स्थानम् । यथा—भात्यत्र परमेश्वरः । राजधानीरूपदेशेन परमेश्वरस्य वाचकता नृपे नियमिता ।

( ठ ) कालः—समयः । चित्रभानुर्विभाति । अत्र कालेन खौ वह्नौ च चित्रभानुपदस्य वाचकता नियम्यते ।

( ड ) व्यक्तिः—लिङ्गम् । स्त्रीपुरुषादिः । यथा—मित्रं भाति । अत्र नपुंसकत्वेन मित्रपदस्य वाचकता सुहृदि नियम्यते ।

वेदे एव स्वरः विशेषप्रतीतिकृत् न च काव्ये श्लेषभङ्गप्रसङ्गात् । आदिशब्दात् तु अभिनयादिः । यथा एतावन्मात्रस्तनिका । लक्षणामूलामपि लक्षयति तत्रैव—

'लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्यायते सा स्याद् व्यञ्जना लक्षणाश्रया ।।'

यथा गङ्गायां घोषः । पूर्वं प्रस्फोटितः ।

आर्थीव्यञ्जनामपि परिभाषयति विश्वनाथः—

'वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः ।
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ।।'

वक्तृवैशिष्ट्ये—

'कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
दूरे पतिः कथय किं करणीयमद्य ।।'

बोद्धव्यवैशिष्ट्ये—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ।।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यसन्निधिवैशिष्ट्ये—

'पश्य निश्चलनिस्पन्दा विसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ।।'

काकुवैशिष्ट्ये यथा—

'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् ।
अविकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ।।'

चेष्टावैशिष्ट्ये—

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ।।'

इति सर्वेषामुदाहरणानि । वाच्यलक्ष्यव्यङ्ग्यरूपाणामर्थानां त्रैविध्याद् त्रिविधेयम् । यथोक्तम्—

'त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ।'

## ( १० ) रसः । रसो वै सः

अथवा

## रस ह्येवायं लब्ध्वाऽऽनन्दी भवति ।

अथवा

## रस एवाऽत्र जीवितम् ।

अथवा

## स्थायीभावो रसः स्मृतः

रसशब्दोऽयं वैदिकसाहित्येऽपि मिलति । यथा—दधानः कलशे रसम् ( ऋक्० ९।६३।१३ ) । किन्त्वत्र सोमरसार्थे एव रसशब्दप्रयोगः । तैत्तिरीयोपनिषदि तु आनन्दार्थे रसशब्दस्य प्रयोगोऽवलोक्यते—'रसो वै सः', 'रस ह्येवायं लब्ध्वाऽऽनन्दी भवति' ( ११।७।१ ) । अलङ्कारशास्त्रेऽस्य शब्दस्यावतारस्तु नाट्यशास्त्रकर्त्रा भरतेनैवेति विदुषां विचारः । राजशेखरानुसारं तु रसस्य सर्वप्रथममुपदेशो दत्तो ब्रह्मणा नन्दिकेश्वराय । परन्तु सम्प्रति न मिलति तत्प्रतिपादितो रससिद्धान्तः । वाल्मीकिरामायणेऽपि रसानामुल्लेखोऽस्ति—'रसैः शृङ्गारकरुणरौद्रवीरभयानकैरि'ति ( २।९ ) । कालिदासध्वनिकारभवभूति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभृतिभिरपि रससङ्केतो दत्तः। एतेन सिद्धयति रसस्य प्राचीना परम्परा। नाट्यशास्त्रस्य षष्ठाध्यायेऽपि पूर्वाचार्याणां सङ्केताः मिलन्ति। अत एव रसोऽस्ति इति स्वीकरणीयमेव।

ननु कोऽयं रस इति जिज्ञासायामुच्यते—काव्यस्य पठनेन, श्रवणेन नाटकस्य च दर्शनेन सहृदयानां हृदये विगलितवेद्यान्तरशून्यो य आनन्दोऽनुभूयते स एव रसपदवाच्य इति सार्वजनीनानुभवः। रसोऽयं कथमनुभूयते इत्यत्र नाट्यशास्त्राचार्याणां भरतमहोदयानां विचार एव श्लाघ्यतरः—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।' इति।

निकषोपलेऽस्मिन् बहुभिस्तर्कज्ञानानुभवधुरन्धरैः स्वीया नवनवोन्मेषशालिनी नीरन्ध्रितवुद्धिधारदर्शिनी शेमुषी प्रतिभा वा परीक्षिता। समयेन संक्षेपेण तेषां परिचयं दास्यामः।

विभावैर्विभावितोऽनुभावैरनुभावितो व्यभिचारिभिः संयुक्तो हि स्थायीभावो रसपदवाच्यः। यथा च मम्मटाचार्यैः—

'कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥'

स्थायिन अविच्छिन्नप्रवाहरूपस्य रत्यादेः रमणीविषयकप्रीत्यादेः लोके व्यवहारे यानि कारणानि ललनादीनि आलम्बनकारणानि चन्द्रोदयादीनि उद्दीपनकारणानि। अथ च कार्याणि रत्यादिजन्यानि नायिकादिभेदेन नानाविधानि कटाक्षादीनि सहकारीणि रत्यादिकार्यस्य शीघ्रप्रतीतौ सहायकानि निर्वेदादीनि तानि नाटचकाव्ययोः चेत् यदा निबध्यन्ते तत् तदा क्रमेण विभावानुभावव्यभिचारिणः कथ्यन्ते। विभावाः कारणरूपाणि, अनुभावाः कार्यरूपाणि व्यभिचारिणः सहायकरूपाणि च इति स्पष्टार्थः। अतिसूक्ष्मरूपेणावस्थितान् रत्यादीन् विभावयन्ति आस्वादयोग्यतामानयन्ति इति विभावाः। तान्येव रत्यादीनि अनुभावयन्ति अनुभवविषयतामापादयन्ति इत्यनुभावाः। रत्यादीनेव विशेषेण अभितः सर्वाङ्गव्यापितया काये शरीरे चारयन्तीति व्यभिचारिणः। यथोक्तम्—

'विशेषादाभिमुख्येन चरणाद् व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ'॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा

'ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम् ।
उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः' ॥

तैर्विभावाद्यैर्व्यक्तः स स्थायीभावः रसः । यथा—कालिदासीये शाकुन्तले प्रथमाङ्के वृक्षसेचनरतां निसर्गसुन्दरीं शकुन्तलां विलोक्य दुष्यन्तो बहु आकर्षितो भवति । इत्थं दुष्यन्तहृदये वर्तमाना सुप्ता रतिरेकान्तोपवनमालिनीतीरादिभिरङ्कुरायते । दुष्यन्तोऽस्ति आश्रयः रतिनामकस्थायीभावस्य । शकुन्तला चालम्बनम् । आश्रमादयश्चोद्दीपनविभावाः । दुष्यन्तस्य रतिभावबोधिकाश्चेष्टाश्चानुभावः । परिणययोग्या नवेति दुष्यन्तभावाः व्यभिचारिणः क्षणिकत्वात् । सर्वे अमी भावा मिलित्वा स्थायीभावं रसरूपेण निष्पादयन्ति ।

केचित्त्वाक्षिपन्ति । ननु मिलितेषु एव विभावादिषु यदि रसानुभूतिस्तु कथं तेषामेकस्य द्वयोर्वा सद्भावे रसानुभूतिरिति चेत् ? शृणु—यस्मिन् काव्ये विभावादीनां मध्ये एकस्य द्वयोर्वा सद्भावस्तर्हि शीघ्रमितराणां प्रकरणवशात् समाक्षेपात् रसनिष्पत्तौ बाधकाभावान्न दोषः । यथा—

'वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे' ॥

इत्यत्र विभावानामालम्बनोद्दीपनरूपाणाम् ।

'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः' ॥

इत्यत्र अङ्गम्लानादिरूपाणामनुभावानाम् ।

'दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बु पूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि' ॥

इत्यत्र व्यभिचारिणां व्रीडौत्सुक्यादीनामेव केवलानां कथनात् साक्षादुल्लेखः । तथापि एतेषाम् असाधारणत्वं मुख्यत्वमन्यथाक्षेपकत्वे नानैकान्तिकत्वम् । न मिलितानां तेषां रसनिष्पत्तिर्हेतुत्वव्यभिचारः । मिलितानामेव विभावादीनां रसनिष्पत्तिहेतुत्वम् इति सिद्धान्तोऽक्षुण्णः । एकस्मिन्नेव निर्दिष्टे तेनैव द्वयोरन्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योराक्षेपे रसनिष्पत्तिरिति सिद्धान्तो ज्यायान् । रसाभिव्यक्तिं प्रति हेतुत्वं च विभावादीनां दण्डचक्रन्यायेनेति सिद्धम् । न च तृणारणिमणिन्यायेन ।

भरतस्य रससूत्रमिदं व्याख्यातं सूरिभिः स्वस्वमतानुसारम्—

( १ ) तत्रादौ तावदुत्पत्तिवादस्याविष्कर्ता भट्टलोल्लटः—अस्य रससूत्र-व्याख्यानस्य सङ्केतो मिलति अभिनवभारत्यां काव्यप्रकाशादौ च । यस्याऽयं सारांशः । अयं संयोगादिति पदस्य 'कार्यकारणभावरूपसम्बन्धात्' इति निष्पत्ति-रित्यस्योत्पत्तिरिति च करोति । इत्थं स्थायिनां विभावेनोत्पाद्योत्पादकभाव-रूपाद् अनुभावेन गम्यगमकभावरूपाद् व्यभिचारिणा पोष्यपोषकभावरूपात् संयोगात् सम्बन्धात् रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्च भवति । अथ च ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः उद्यानादिभिरुद्दीपन-विभावैरुद्दीपितः अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः व्यभि-चारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये रसः । नटे तु तुल्यरूपतानु-सन्धानवशादारोप्यमाणः सामाजिकानां साश्चर्यानुभवश्चमत्कारहेतुरिति ।

**समालोचना**—किन्तु नैतद् युक्तम्—१. सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधात् । २. न च तज्ज्ञानमेव चमत्कारहेतुः । शाब्द-तज्ज्ञानेऽपि तदापत्तेः । ३. अन्यथैवोपपत्त्या तादृशकल्पनायां मानाभावाच्च । ( मतमिदमग्राह्यम् ) ।

( २ ) तदनन्तरमनुमितिवादस्याविष्कर्ता शङ्कुकः—राम एवाऽयमयमेव राम इति न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा न वाऽय-मिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे—

'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥'

'दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥'

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्द-व्यपदेश्यैः संयोगाद् गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद् रसनी-यत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावस्तत्रा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्नपि सामाजिकानां वासनया चर्व्यमाणो रसः। इति मम्मटाचार्यप्रतिपादितं श्रीशङ्कुकमतम्।

**समालोचना**—एतदप्यहृदयग्राहि। स्थायिनः सहचारिणो वाऽनुकरणमसम्भवं वेशादीनामनुकरणसम्भवात्। कस्य वा शान्ता पिपासा मृगमरीचिकाजलेन? चित्रतुरगादिकल्पना बालानां मनोविनोदे भवेत् सक्षमा। न च परिपक्वधियां सचेतसाम्। एकस्य रतिक्रोधादिरपरस्मिन् कथमनुभवविषयतां यास्यति। अत एव भावे रसानुमितिरसम्भवा। यतो हि प्रत्यक्षमेव ज्ञानं सम्भवं चमत्कारोत्पादने नानुमानम्। लोकप्रसिद्धिमवधूय—अन्यथाकल्पने मानाभावः। सूत्रस्यान्यथैव योजनासम्भवात्।

(३) अथ भुक्तिवादस्याविष्कर्ता भट्टनायकः—तटस्थो नटो रामादिकसम्बन्धित्वेन नात्मगतत्वेन सामाजिकसम्बन्धित्वेन रसो न प्रतीयते नानुमीयते। रामगतया नटगतत्वेनाऽनुमितयाऽपि रत्या सामाजिकेऽसत्या चमत्कारजननासम्भवात् नोत्पद्यते न जन्यते विभावादीनां वास्तविकत्वाभावात् नाभिव्यज्यते व्यञ्जनया नोपस्थाप्यते। सिद्धस्यैव व्यञ्जनयोपस्थापनसम्भवात्। अभिधालक्षणाभ्यां द्वितीयेन विभावादेर्व्यक्तिविशेषांशपरिहारेण उपस्थानं साधारणीकरणं तदात्मना भाव्यमानः साधारणीक्रियमाणः स्थायी सत्त्वगुणोद्रेकेण रजस्तमसी अभिभूयाविर्भावेण यत् प्रकाशस्फुरणं स एवानन्दात्मिका संवित् ज्ञानं तस्य विश्रान्तिः ज्ञेयान्तरासम्पर्केण अवस्थानं तत् स्वरूपेण भोजकत्वनामकव्यापारेण साक्षात्कारेण यः भुज्यते आस्वादविषयीक्रियते इति भट्टनायकमतसारः।

शब्दस्य काव्यनाट्ययोरभिधाविलक्षणो भावकत्वभोजकत्वोभयरूपो व्यापारोऽस्ति। तत्र काव्यार्थबोधसमनन्तरमेव आद्येन व्यापारेण विभावादिरूपसीतादयो रामसम्बन्धिनी रतिश्च सीतात्वरामत्वसम्बन्धांशमपहाय सामान्यतः कामिनीत्वरतित्वादिनैवोपस्थाप्यते द्वितीयेन तु साधारणीकृतविभावादिसहकृतेन सा रतिः सामाजिकैरास्वाद्यत इति भावः।

**समालोचना**—भावकत्वभोजकत्वरूपव्यापारद्वयकल्पनायां प्रमाणं नास्ति। साक्षात्कारप्रक्रियायामपि नास्ति मानम्। भुक्तेर्ज्ञानातिरेकस्य अनुभवबाधितत्वेन निष्पीड्यमानस्य चास्य अभिव्यक्तिपक्ष एव पर्यवसानात्।

(४) अभिव्यक्तिर्वाऽस्याविष्कर्ता अभिनवगुप्तः—स्थायिनो विभावादिभिः समं संयोगात् व्यङ्ग्यव्यञ्जकभावरूपसम्बन्धात् वा विभावादिपदसंयोगात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिलनात् रसस्य निष्पत्तिरिति श्रीमदभिनवगुप्तविचारसारांशः। तथा हि लोके प्रमदादिभिरालम्बनैः चन्द्रिकादिभिः उद्दीपनैः कटाक्षादिभिरनुभावैश्चिन्तादिभिः सञ्चारिभिः रामोऽयं सीताविषयकरतिमान् सीताविषयककटाक्षादिमत्वात् यन्नैवं तन्नैवं यथा अहम् इत्येवं रत्यादेरनुमाने अभ्यासनैपुण्यवतां सामाजिकानां काव्ये नाट्ये च कारणत्वकार्यत्वसहकारित्वव्यपदेशपरित्यागेन विभावनानुभावनव्यभिचारणव्यापारवत्वात् अलौकिकविभावादिशब्दव्यवहार्यैः ममैवेते शत्रोरेवैते तटस्थस्यैवैते विभावादय इति सम्बन्धविशेषपरिहारनियमस्य चानिर्णयवशात् साधारण्येन प्रतीतैः रामत्वादिविशेषांशरहितेन पुरुषत्वादिना ज्ञायमानैः अभिव्यक्तः सामाजिकसंस्काररूपेण सूक्ष्मतया प्रथमतः स्थितोऽपि साधारणीकृतविभावादिभिः आविर्भूतो रत्यादिस्थायी नियतप्रमातृमतोऽपि व्यक्तिविशेषांशस्य परिहारवशात् विगलितवेद्यान्तरचेतसा सकलहृदयसंवादभाजा प्रमात्रा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतः।

आस्वादैकप्राणः विभावादिसमयमात्रस्थायीपानकरसन्यायेन आस्वाद्यमानः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वं तिरोदधत् ब्रह्मरसास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः। विभावादिषु व्यञ्जनव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायां सहृदयतयोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रसः पण्डितराजमते।

**साधारणीकरणव्यापारः**—अस्त्येकः साधारणीकरणाभिधो व्यापारः रसविमर्शप्रसङ्गे विवेचनार्हः। प्रभावादेवास्य सामाजिकरूपप्रमाता तदानीं सेतुबन्धदशमुखवधादिकारिभ्यो रामादिभ्य आत्मानम् अभिन्नत्वेन मन्यते। अनेनैव प्रकारेण रत्यादयो साधारण्येनैव प्रतीयन्ते। अन्यथा रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सामाजिकानां व्रीडादिरपि भवेत्। परगतत्वेन प्रतीतौ तु अनवस्थादोषः। अपि च परस्येति न परस्येति ममेति न ममेति चेत्यादिरूपेण विभावादेरास्वादे परिच्छेदो न जायते। ते तु प्रथमतः साधारण्येनैव प्रतीयन्ते।

साधारणीकरणशब्दस्य प्रयोगो व्यक्तित्वलये, निर्वैयक्तीकरणे, सम्बन्धविशेषपरित्यागे असामान्यस्य सामान्यीकरणे चार्थे भवति। भट्टनायकः कथयति अमुमेव भावनव्यापारनाम्ना, विश्वनाथस्तु विभावनव्यापारनाम्ना अभिनवगुप्तश्च वीतविघ्नप्रतीतिव्यापारनाम्ना।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापारस्यास्य साधारणीकरणस्याविष्कारकोऽस्ति भट्टनायक एव। यद्यपि भरतेनाऽपि सङ्केतोऽत्र विहितः। किन्तु भट्टनायक एव स्पष्टं करोति व्याख्यानमस्य। धनञ्जयमम्मटविश्वनाथादिभिरपि स्वीकृतोऽयं व्यापारो भङ्ग्यन्तरेण।

## (११) श्रव्यकाव्यम्

श्रवणयोग्यं काव्यं श्रव्यकाव्यमुच्यते। ऐन्द्रियिकाधारेण साहित्यस्य दृश्यकाव्यश्रव्यकाव्यनामानौ भेदौ कथितौ। शैलीदृष्ट्या कृता विभागाः सन्ति गद्यं, पद्यं, मिश्रमिति। अर्थदृष्ट्या कृता विभागाः सन्ति—उत्तमं, मध्यमम्, अधममिति। वस्तुविषयदृष्ट्या च प्रबन्धकाव्यं खण्डकाव्यं मुक्तककाव्यं च। केषाञ्चिन्मते तु चित्रकाव्यं गुणीभूतव्यङ्ग्यकाव्यं ध्वनिकाव्यं च। क्रान्तदर्शनः कविः, तत्कर्म च काव्यम्। तद्विभजते विश्वनाथः—

> 'काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम्।
> दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्॥
> श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा।'

श्रोतव्यमात्रं केवलश्रवणयोग्यं काव्यं श्रव्यमुच्यते। मात्रपदनिवेशेन दृश्यकाव्येषु वाचिकांशमादाय श्रवणयोग्यत्वस्य विद्यमानत्वेऽपि आङ्गिकाद्यंशेषु दर्शनयोग्यत्वस्यापि विद्यमानत्वान्नातिव्याप्तिः। तत् श्रव्यकाव्यमपि द्विधा द्विप्रकारकं भवति—

(क) पद्यम् (ख) गद्यञ्च। किं तावत् पद्यमित्याकाङ्क्षायामुच्यते—

> 'छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम्।'

छन्दोऽनुष्टुबादिः। तच्च छन्दःशास्त्रप्रसिद्धलक्षणम्। तेन छन्दसा बद्धानि नियमितानि पदानि यत्र तत् काव्यं पद्यकाव्यमुच्यते। तेन पद्येन समाप्तिबोधकक्रियान्वये पद्यान्तरनिरपेक्षेण एकेन मुक्तकम्। द्वाभ्यां समाप्तिबोधकक्रियान्वये युग्मकं त्रिभिः सान्दानितकं, चतुर्भिः कलापकं पञ्चभिश्च कुलकं प्रोक्तम्। यथा—

> 'द्वाभ्यां तु युग्मकं सान्दानितकं त्रिभिरिष्यते।
> कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्॥'

पद्यकाव्यमपि द्विविधं भवति—१. अनिबद्धकाव्यम् २. प्रबन्धकाव्यञ्च सुनियोजितकथाबन्धरहितमनिबद्धकाव्यमिति डा० जगदीशचन्द्रमिश्र अलङ्कार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रस्येतिहासे १९८ पृष्ठे। प्रबन्धकाव्यमपि द्विधा भवति—१. महाकाव्यम्, २. खण्डकाव्यञ्च

**( १ ) महाकाव्यम्**—सर्गैरवान्तरार्थवर्णनैरुपलक्षितो बन्धः रसवत् पद्य-कदम्बविन्यासो महाकाव्यम्। तत्रैको नायको भवति। स देवोऽपि भवितु-मर्हति धीरोदात्तगुणान्वितः सद्वंशः क्षत्रियो वापि। एकवंशभवाः बहवोऽपि भूपा तत्र महाकाव्ये नायकाः सम्भवाः। यथा—रघुवंशे दिलीप-रघ्वज-दशरथ-रामचन्द्रादयः। सुरस्य नायकत्वं यथा—शिशुपालवधे श्रीकृष्णः। कुमारसम्भवे कार्तिकेयो वा। क्षत्रियस्य नायकत्वं यथा—किरातार्जुनीये मध्यमपाण्डवोऽर्जुनः, नैषधे नलः। यथा च परिभाषयति विश्वनाथः साहित्यदर्पणे—

'सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।'

**( क ) रसविमर्शः**—महाकाव्ये एक एव अङ्गी रसः कर्तव्यः। शृङ्गारः, वीरः शान्तो वा। बहुवचनेन करुणस्यापि संग्रहः। तेन रामायणस्य महाका-व्यत्वमक्षतम्। अङ्गरूपेण तु सर्वेऽपि रसाः सम्भवन्ति। सर्वे नाटकसन्धयः मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्याः पञ्चापि योज्याः। यथोक्तम्—

'शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः॥'

यथा—नैषधे शृङ्गारः, शिशुपालवधे किराते च वीरः, महाभारते शान्तश्च।

**( ख ) वृत्तविमर्शः**—इतिहासोद्भिदं महाभारतादिप्रसिद्धं लोकप्रसिद्धं वा वृत्तं महाकाव्ये ग्रन्थनीयम्। तच्च सज्जनाश्रयं शिष्टपुरुषाचरणविषयं भाव्यं न च दुष्टपुरुषाचरणाश्रयम्। दुष्टपुरुषं नायकत्वेन न वर्णनीयम्। तत्तूपनायक-त्वेनैव भाव्यमिति पङ्क्तिस्वारस्यम्। यथा च विश्वनाथः—

'इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम्।'

**( ग ) पुरुषार्थविमर्शः**—तत्र महाकाव्ये धर्मार्थकाममोक्षा वर्णनीया। किन्तु फलभाग् एक एव करणीयः। न पुनः द्वौ वा त्रयो वा। तथात्वे प्रधानप्रयोज-नस्य सन्देहविषयत्वात् सुन्दोपसुन्दन्यायेन परस्परोपमर्दकत्वात् सहृदयानामा-कुलीभावप्रसङ्गाच्च। यथोक्तम्—

'चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत्।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(घ) प्रारम्भविमर्शः—महाकाव्ये प्रारम्भे नमस्क्रिया योज्या। यथा—रघुवंशे अर्धनारीश्वरस्य वा नारायणशुक्लस्य ऊर्मिलीये गुर्वादीनाम्। तदभावे आशीर्वादो योज्यः प्रारम्भे। यथा—मुद्राराक्षसे। क्वचिच्च वर्णनीयनायकस्य निदेशोऽपि योज्यः। यथा—किराते, शिशुपालवधे वा। क्वचिच्च खलानां निन्दा अपि भवितुमर्हति। यथा—धर्मशर्माभ्युदयादौ। अवश्यकर्तव्यत्वनिरासाय एव क्वचित्शब्दसन्निवेशः। सज्जनानां गुणकीर्तनमपि क्वचिद् भवितुमर्हति। यथोक्तं साहित्यदर्पणे—

'आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा।
क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम्॥'

(ङ) वृत्तविमर्शः—महाकाव्यस्य प्रत्येकसर्गेषु एकवृत्तप्रयोगो विधेयः। सर्गान्ते च वृत्तपरिवर्तनम् आवश्यकम्। सर्गाश्च नातिस्वल्पा करणीया न वा नातिदीर्घाः। संख्या च सर्गाणां भाव्या अष्टाधिका पञ्चविंशतिपद्येनान्यूनाः शतत्रयाधिकपद्ययुता वा सर्गा न विधातव्येति सम्प्रदायः। कोऽपि सर्गो नानावृत्तमयो विधातव्यः। सर्गान्ते च भाविसर्गस्य कथा सूचितव्या। यथोक्तम्—

'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः।
नातिस्वल्पा नातिदीर्घा सर्गा अष्टाधिका इह॥
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्॥'

(च) वर्णनीयविषयविमर्शः—सन्ध्यायाः सूर्यस्य चन्द्रस्य रात्रेः प्रदोषस्य ध्वान्तस्य दिनस्य प्रातःकालस्य मध्याह्नसमयस्य मृगयायाः शैलस्य ऋतूनां वनानां सागराणां वा ऋतोर्वनस्य सागरस्य सम्भोगस्य विप्रयोगस्य मुनेः स्वर्गस्य पुरस्य अध्वरस्य रणस्य यात्रायाः विवाहस्य उपायचतुष्टयमन्त्रणायाः पुत्रस्य जन्मनः नृपामात्यसेनापतिप्रभृतीनां यथायोगं साङ्गोपाङ्गवर्णनं महाकाव्ये आवश्यकम्। नृपे देव्यां महामात्ये पुरोहिते कुमारे सेनापतौ ग्रामे पुरेऽब्धौ उद्याने शैलेऽरण्ये मन्त्रे दूते प्रयाणादौ च किं किं वर्णनीयमिति ग्रन्थान्तरेषु लिखितमेव। विस्तरभिया नाऽत्र लिख्यते। यथा—

'सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः॥
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह' ।।

( छ ) अभिधानविमर्शः—कवेः वृत्तस्य नायकस्य इतरस्य वा नाम्ना महाकाव्यस्य नाम करणीयम् । सर्गोपयोगिकथया च सर्गनाम करणीयम् ।

यथा—

'कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गं नाम तु ।।'

यथा—प्रभुदत्तस्य गणपतिसम्भवम्, काशीनाथस्य रुक्मिणीहरणम्, विष्णुदत्तशुक्लस्य गङ्गासागरीयम्, रेवाप्रसादस्य सीताचरितम्, उमाशङ्करस्य छत्रपतिचरितम् ।

( २ ) खण्डकाव्यम्—पूर्वाभिहितस्य महाकाव्यस्य यत्किञ्चिल्लक्षणहीनम् एकांशानुरूपं संस्कृतपद्यैर्निर्मितकाव्यं खण्डकाव्यं भवति । यथोक्तम्—

'खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ।'

यथा—कालिदासस्य मेघदूतम् । वा मम तापसीयम् । पद्मशास्त्रिणोऽस्ति स्वराज्यम् ।

खण्डकाव्यं महाकाव्यात् पश्चाद्भवति इति कथनमसङ्गतम् । ऋग्वेदकाल एव खण्डकाव्यस्य प्रारम्भो बभूवेति डा० जगदीशचन्द्रमिश्रः । अग्रवालमहोदयास्तु पञ्चप्रकारतां प्रतिपादयति खण्डकाव्यानाम्—१. ऋग्वेदकालिकम्, २. भक्तिरसमयम्, ३. ऐतिहासिकम्, ४. रूपकान्तर्गतम् ५. श्रृङ्गारप्रधानं सङ्कीर्णञ्च वा ।

विशेषः—महापात्रो विश्वनाथः स्वीकरोति पद्यकाव्यस्य द्वीतरो भेदः कोष इति । यथोक्तम्—

'कोषः श्लोकसमूहस्तु स्यादन्योऽन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ।।'

( ३ ) गद्यम्—वृत्तस्य गन्धेन रहितं श्रव्यकाव्यं गद्यमिति विश्वनाथः । तच्चतुर्विधम्—

१. मुक्तकम्, २. वृत्तगन्धि, ३. उत्कलिकाप्रायम्, ४. चूर्णकञ्च ।

समासशून्यं गद्यं मुक्तकमुच्यते । वृत्तस्यांशेन युक्तं गद्यं वृत्तगन्धि । दीर्घसमासबहुलमुत्कलिकाप्रायम् । अल्पसमासकं च चूर्णकं प्रोक्तम् । यथा—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद् दीर्घसमासाढ्यं तूर्यं चाल्पसमासकम् ॥'

क्रमेणोदाहरणम्—

( १ ) अतः परं सर्वाः शङ्काः स्वयमेव ते हृदि समाहिता भविष्यन्ति । गच्छ. गृहम् । अहमपि वनं गच्छामि ।

मम सौप्रभस्य समावर्तनवर्णनायाम् ।

अथवा

इच्छा एव बीजम् । बीजेन च तरुः इत्यादि ममैव कौमारस्य गृहस्थ-वर्णनायाम् ।

( २ ) विश्वनाथस्य यथा—समरकण्डूलनिविडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगर इत्यादि । अत्र कुण्डलीकृतकोदण्ड इति अनुष्टुब्वृत्तस्य पादः ।

( ३ ) 'सुदृढेष्टिकानिर्मितप्राचीनभित्त्युपान्तस्थलघुवेश्मस्थापितशतयोजनस्थारिचित्रप्रदानकुशलयन्त्रैः ।'

मम सौप्रभस्य प्रस्तावनावर्णनायाम् ।

( ४ ) साहित्यपुराणे भारतीयसमाजेऽनुदिनमनुभूयमानं विघटनं निवारयतः ।

मम किरातार्जुनीयशिवपुराणयोस्तुलनात्मकाध्ययने पञ्चमवर्णनायाम् ।

एतेषां गद्यप्रकाराणामवलोकनं कथायामाख्यायिकायां च द्रष्टुं शक्यते ।

( १ ) **कथा**—कथायां सरसवस्तुनिबन्धनं भवति । क्वचिदार्यावृत्तस्य क्वचिद्वक्त्रापवक्त्रयोश्च सन्निवेशोऽत्र भवितुमर्हति । आदौ पद्यैर्नमस्कारोऽपि वर्ण्यते । खलादीनां वृत्तकीर्तनमत्र भवति । यथा च महापात्रो विश्वनाथः—

'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ।'

( २ ) **आख्यायिका**—इयमपि कथावत् भवति । तत्र कवेर्वंशानुकीर्तनं मिलति । अन्यकवीनामपि वृत्तं प्राप्यते । क्वचित् पद्यमपि । कथांशानां व्यवच्छेदो भवति आश्वाससंज्ञकः । आर्यावक्त्रापवक्त्राणां छन्दसां येन केनचित् छन्दसा,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आश्वासस्य प्रारम्भेऽन्यापदेशेन वक्ष्यमाणविषयस्य सूचनमपि स्यात् । यथा—हर्ष-चरितादिः । यथोक्तम्—

'आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्तनम् ।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित् ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशनाश्वासमुखे भाव्यर्थसूचनम् ।'

**विशेषः**—कथाऽऽख्यायिकयोः सीमाङ्कनं दुष्करम् । आलङ्कारिकाश्चात्र भिन्न-विचाराः । भामहेन कृतः पार्थक्यप्रदर्शनोद्योगः दण्डिना तिरस्कृतः । तदपि विश्व-नाथेनाऽन्यथा कृतः । कथाऽऽख्यायिकयोरेक एव व्यावर्तकगुणः दृश्यते । कथायां कल्पनाप्राचुर्यं भवति, आख्यायिकायां चैतिहासिकाधारः । व्यार्वतकगुणोऽयं बाणभट्टप्रदर्शितयोः कादम्बरीहर्षचरितयोरालोडनेन प्रस्फुटति । मदीये सौप्रभे कौमारे चापि कल्पनैवाश्रिता । दशकुमारचरितमपि आख्यायिकारूपेण स्वीकृतम् ।

## श्रव्यकाव्यस्येतरे भेदाः

( क ) **चम्पू**—पद्यस्य गद्यस्य च प्रोक्तान् गुणानाश्रित्य मिश्रं यल्लिख्यते काव्यं तदेव चम्पूकाव्यमुच्यते । यथा नलचम्प्वादिः । उक्तं च—

'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।'

अत्र किं गद्ये किं पद्ये वर्णनीयमित्यत्र स्वातन्त्र्यम् ।

( ख ) **विरुदम्**—गद्यपद्यमयी नृपप्रार्थना यत्र भवति तत् विरुदसंज्ञकं काव्यं भवतीति विश्वनाथमहापात्रः । यथा—

'गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ।'

यथा—विरुदमणिमाला ।

( ग ) **करम्भकम्**—विविधाभिर्भाषाभिर्निर्मितं काव्यं दधिसक्तुमिश्रणवत् करम्भकं ज्ञेयम् । उक्तं च

'करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ।'

यथा—प्रशस्तिरत्नावली ( षोडशभाषामयी ) विश्वनाथस्य ।

**समीक्षणम्**—इतोऽधिकाः भेदा न सम्भवन्तीति तत्रभवान् विश्वनाथः सहित्यदर्पणस्य षष्ठपरिच्छेदे । किन्तु वैदेशिकसाहित्यसम्पर्कात् प्रतिदिनं नवा गद्यधाराः पद्यधाराश्चाक्षिपथमायान्ति । तदन्तभार्वश्च वर्तमानभेदोपभेदेषु सम्भवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न प्रतीयते। यथाऽऽङ्गलभाषानुकृतकहानी-उपन्यास-लघुकथा-गीतिकाव्यादीनाम्। मन्ये लक्ष्ये समागते लक्षणविमर्शो भविता एव।

अन्याचार्याः—अन्यैरपि कृतं वर्गीकरणं काव्यस्य। सङ्क्षेपेण तद्विचाराः द्रष्टव्याः। तत्रादौ आनन्दवर्धनः। आचार्योऽयमुपदिशति काव्यस्य त्रैविध्यम्— १. ध्वनिकाव्यम्, २. गुणीभूतव्यङ्ग्यकाव्यम् ३. चित्रकाव्यञ्च। मम्मटोऽपि त्रैविध्यमेव वदति—१. उत्तमकाव्यम्, २. मध्यमकाव्यम् ३. अधमकाव्यञ्च। पण्डितराजो जगन्नाथः चातुर्विध्यं स्वीकरोति काव्यस्य—१. उत्तमोत्तमम्, २. उत्तमम्, ३. मध्यमम् ४. अधमञ्च। रुद्रटदण्डीहेमचन्द्रादिभिस्तु भाषादृष्ट्याऽपि काव्यभेदाः कल्पिताः। किन्तु गद्यकाव्यस्य विचारो न मिलति कुत्रचित्। गद्यस्य महनीयभेदस्य विवेचनं कथं त्यक्तमिति महदाश्चर्यम्। पद्यकाव्ये चास्यान्तर्भावो असम्भव एव। भिन्नरुचिर्हि लोकः।

## ( १२ ) दृश्यकाव्यम्

### अथवा

## नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्।

परम्परा—विश्वसाहित्ये प्रथमज्ञानसङ्ग्रहरूपो वेदोऽपि परिचितोऽस्ति दृश्येन। ऋग्वेदस्य पुरुरवोर्वशीसंवादे, यमयमीसंवादे, इन्द्रइन्द्राणि-वृषाकपिसंवादे सरमापाणिसादिसंवादे च नाट्यकलामूलमन्वेष्टुं शक्यते। कत्यायनश्रौतसूत्रे[1] तु मिलत्यभिनयप्रसङ्गोऽपि। स्वीकृता मैक्समूलर[2]-लेवी[3]-ओल्डेनवर्ग[4]-प्रभृतिभिरस्मात् कारणात् नाट्यकलोत्पत्तिः वैदिकयुगे एव। दासगुप्तोऽपि[5] समर्थयति मतममुमेव। यजुर्वेदस्य वाजसनेयसंहितायां लिखितमस्ति यत् शैलूषजातीयाः जीविकोपार्जनाय नाटकमकुर्वन्[6]। पाणिनेरष्टाध्यायी[7],

१. कात्यायनश्रौतसूत्र ७।८।२५।

२. वर्जन आफ द ऋग्वेद, वाल्यूम १, पृ० १७३।

३. Le Theater Indian Bibliothique de I पृ. ३०७।३०८-१८९०।

४. जेड. डी. एम. जी. ३२, पृ० ५४, एफ ३९, पृ० ५२।

५. डा० एस० एन० दासगुप्ता एण्ड एस० के० डे—हिस्ट्री आफ संस्कृत लिटरेचर भाग १, पृ० ४४।

६. अध्याय ३० मंत्र ६।

७. ४।१।११०, ४।३।१११।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाल्मीकेर्रामायणम्[१], कौटिल्यस्यार्थशास्त्रं[२] बौद्धजातकानि[३] च नाट्यकलातः परिचितानि। महाभारते[४] तु नट-नर्तक-गायक-सूत्रधारादीनां स्पष्टतयोल्लेखोऽस्ति। पातञ्जलमहाभाष्ये तु कंसवध-बालिवधनामकयोः नाटकयोः स्पष्टतयोल्लेखोऽस्ति। कीथमहोदयः[५] अस्मादेव कालात् स्वीकरोति नाट्यकलोत्पत्तिः। वात्स्यायनोऽपि[६] स्वीकरोति कामसूत्रेऽभिनयप्रवृत्तिं समाजे प्रचलमानाम्। प्रमाणैरेभिः सिद्ध्यति यत् भारते वर्षे प्राचीनकालादेव जनतायाः मनोरञ्जनाय नाट्यकलायाः प्रचारः प्रसारश्चाभवत्।

**उत्पत्तिः**—यस्मात् दिनात् कोऽपि बालकः कस्याऽपि वृद्धस्य क्रीडनावसरेऽनुकरोति स्म तस्मादेव क्षणात् सर्वलोकरञ्जिका कलेयं विकसिता इति विदुषां विचारः[७]। वीराणां सम्मानार्थं क्रियमाणा पूजा एवाऽस्ति कारणं नाटकोत्पत्तेरिति वदति रिजवे[८]महोदयः। प्राकृतिकपरिवर्तनानां जनताऽक्षिसमक्षं मूर्तरूपेण प्रदर्शनमेवास्ति हेतुर्नाटकोत्पत्तौ इति कीथोक्तिः[९]। पुत्तलिकानृत्यमेवास्ति हेतुरिति जर्मनदेशीयः पिशेलः[१०]। अयं स्वीकरोति यत् भारतवर्ष एवाग्रणी। तत एव च प्रससार कलेयं विश्वे। छायानाटकमेवास्ति कारणं दृश्योदयस्येति कथनमस्ति डा० स्टेनकोनो-महोदयस्य।[११] मे-पोल-थ्योरी-समुपासकानां मते तदेवास्ति हेतुरुत्पत्तौ।[१२] इन्द्रध्वजेनास्य साम्यं भारते।

---

१. २।६७।१५।
२. ४१ अध्याय।
३. विनयपिटक-चुल्लवग्ग।
४. डा० दशरथ ओझा—हिन्दी नाटक, पृ० २६।
५. संस्कृत ड्रामा, पृ० ४५।
६. कामसूत्र, नागरप्रकरण १५।
७. दि डेवेलपमेन्ट आफ ड्रेमेटिक आर्ट, पृ० १।
८. ड्रामा एण्ड ड्रेमेटिक डांसेज आफ नान-यूरोपियन रेसेज।
९. संस्कृत ड्रामा, पृ० ४५–४८।
१०. थ्योरी आफ पपेट शो।
११. दास इण्डिस्के ड्रामा, पृ० ४५।
१२. मे-पोल-थ्योरी।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाट्यशास्त्रे भरतेनाचार्यप्रवरेण किमपि भिन्नमेव कथानकमुपन्यस्तमुत्पत्तिविषये। व्यतीते कृतयुगे त्रेतायां व्यसनलिप्तं लोकं दृष्ट्वा देवाः पितामहं सदाचारस्थापनाय प्रार्थयामासुः। स विभुः नाट्यं नाम पञ्चमं वेदं सृष्टवान्, यत्राप्सरसः स्त्रीपात्राय निर्मिताः। विश्वकर्मा च रङ्गशालां रचयति स्म। तेनैव विधिना भरतोऽपि नाट्यवेदप्रचारप्रसाराय नियुक्तः। स च प्रथमम् असुरपराजयं, तत्पश्चात् त्रिपुरदाहं प्रस्तौति स्म प्रथमरङ्गमञ्चे दुःखार्तानां, शोकार्तानां श्रमार्तानां च तोषाय[1]। यूनानदेशीयो युगद्रष्टा अरस्तूमहोदयोऽपि कथयति किञ्चिदित्थमेव।[2]

**विकासः**—नाटकानां व्यवस्थिता परम्परा भासात् प्रचलति। टी० गणपतिशास्त्रिणा प्रकाशमानीतोऽयं महापुरुषः १९०९ खिस्ताब्दे। बाण-दण्डी-भामह-वामन-वाक्पतिराज-राजशेखराभिनवगुप्तपादादयोऽपि प्रतिभयाऽनया सुपरिचिताः[3]। यद्यपि सिलवां-लेवी-महोदयः, विण्टरनित्समहोदयः, सी० आर० देवधरमहोदयश्च भासकर्तृत्वं न स्वीकरोति। तन्मते भासनाम्ना प्रचारितानि नाटकानि महेन्द्रेण शीलभद्रेण वा रचितानि[4]। वर्निटमते[5] तु केनाऽपि दाक्षिणात्येन कृतमिदं रचनासमुदयमिति। किन्तु अनुसन्धातृभिः सर्वं निश्चप्रचं भणितं भासकृतम्[6]। अतो नाऽत्र सन्देहः।

कालिदासोऽस्योत्तरवर्त्ती यस्य नवनवोन्मेषशालिन्या प्रतिभया सुरभितं संस्कृतकाननमाप्रलयात्। प्रशंसन्नमुं गेटे-महोदयो न श्रान्तो भवति। टैगोरोऽपि[7] तमनुकरोति। लूडर्समहोदयेन मध्य-एशियास्थ—तुरफान-नामकस्थानादन्विष्टं शारिपुत्रप्रकरणमस्ति अश्वघोषस्य सर्वविजयिनी सम्पत्। मृच्छकटिकरचयिता शूद्रकोऽपि समाराध्योऽस्मिन् प्रसङ्गे। हृदयहर्षको हर्षोऽपि नागा-

१. नाट्यशास्त्र १।८–१९।
२. आन दि आर्ट आफ दि पोयेट्री, पृ० ३५।
३. काणे—'स्वप्नवासवदत्तम्' की भूमिका।
४. दासगुप्ता—हिस्ट्री आफ संस्कृत लिटरेचर, भाग १, पृ० १०७।
५. बुलेटिन आफ स्कूल आफ ओरियेन्टल स्टडीज—३, पृ० ३५।
६. डा० भोलाशंकर व्यास—संस्कृत कवि-दर्शन, पृ० २२८।
७. प्राचीन साहित्य, पृ० २५।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्दादिभिः स्पृहणीयः। का कथा भवभूतेर्यत्र ग्रावा अपि रोदिति वज्रस्यापि हृदयं दलति। मुद्राराक्षसविधाता विशाखदत्तोऽपि कस्यापरिचितः? काव्यशास्त्रिभिः ससम्मानमुदाहृतो वेणीसंहाररचयिता नारायणभट्टोऽपि सुपरिचित एव संस्कृतसाहित्ये। अनर्घराघवाय मुरारिः, तापसवत्सराजाय अनङ्गहर्षः, उदात्तराघवाय मायुराजः, आश्चर्यचूडामणये शक्तिभद्रोऽपि सुरभारतीसमुपासकानां हृदयकमले विराजते। कुन्दमाला, बालरामायणम्, कर्णसुन्दरी, कनकजानकी, प्रबोधचन्द्रोदयश्च कस्य मनो न हरति। प्राचीनकालादेव प्रचलमाना नाट्यलेखनपरम्परा अद्यावधि अविच्छिन्नाऽवलोक्यते।

**सैद्धान्तिकविवेचनम्**—काव्यं द्विधा—१. दृश्यम् २. श्रव्यं च। दृश्यं तत्राभिनययोग्यम्। रूपकमपि तस्य नामान्तरम्। अभिनयेऽवस्थाया अनुकृतिरेव भवति। स चावस्थानुकारश्चतुर्विधः—

१. आङ्गिकः, २. वाचिकः, ३. आहार्यः ४. सात्त्विकः।

रूपकस्य दशभेदाः सन्ति—१. नाटकम्, २. प्रकरणम्, ३. भाणः, ४. व्यायोगः, ५. समवकारः, ६. डिमः, ७. ईहामृगः, ८. अङ्कः, ९. वीथी १०. प्रहसनञ्च। उपरूपकाणि सन्ति अष्टादश—१. नाटिका, २. त्रोटकम्, ३. गोष्ठी, ४. सट्टकम्, ५. नाट्यरासकम्, ६. प्रस्थानकम्, ७. उल्लाप्यम्, ८. काव्यम्, ९. प्रेङ्खणम्, १०. रासकम्, ११. संलापकम्, १२. श्रीगदितम्, १३. शिल्पकम्, १४. विलासिका, १५. दुर्मल्लिका, १६. प्रकरणी, १७. हल्लीशः, १८. भाणिका च। सर्वेषां रूपकाणामुपरूपकाणां च लक्षणं रूपकवद् भवति। विशिष्टं तत्रैव क्रमे वक्ष्यामः—

( १ ) **नाटकम्**—कथानकमस्य ख्यातवृत्तं भाव्यम्। पञ्चसन्धयोऽप्यपेक्षिताः। विलासर्द्ध्यादियुक्तमेव करणीयं नाटकं नानाविभूतिमत्। नानारसा अपि अपेक्षिता सुखदुःखादयोऽपि। अङ्काश्च पञ्चतोऽन्यूनाः दशानधिकाः। एकस्तत्र नायकः। स च प्रख्यातवंशः। दयादाक्षिण्यादिमुनिवृत्तिसम्पन्नो, धीरोदात्तो, दिव्यो दिव्यादिव्यो वा गुणवान् चापेक्षितः। नाटके एकस्यैव रसस्य प्राधान्यं भवति शृङ्गारस्य वीरस्य वा। शेषास्तु रसा गौणाः कार्याः। निर्वहणसन्धौ अद्‌भुत एव रसो भवति शोभनः। नायककार्ये चत्वारः पञ्च वा व्यापृताः नराः कार्याः मुख्यरूपेण। नाटकबन्धनं च गोपुच्छसमं करणीयम्।

( क ) **अङ्कः**—अङ्के नेतुश्चरितं प्रत्यक्षतः कार्यम्। रसैः भावैः भावाभासैः तत्र शोभा कार्या। अर्थश्च झटिति ज्ञेयः कार्यः। दीर्घसमासाः न कार्या।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र अवान्तरैकार्थः विच्छिन्नः कार्यः किञ्चिल्लग्नबिन्दुकश्च । बहुभिः प्रधानोद्देश्यैः युक्तो न कार्यः । बीजसंवृत्तिमत्ताऽपि न कार्या तत्र । अङ्को बहुघटनाभिः युक्तो भवति पद्यप्रचुरताऽपि न भाव्या । आवश्यककार्याणां सन्ध्यावन्दनादीनां परित्यागोऽपि नोचितः । अनेकदिननिर्वर्त्या कथा न योज्या । तत्रावर्तमानोऽपि सन्निहितनायकः कार्योऽङ्कः ।

दूराह्वानं, वधः, युद्धं, राज्यविप्लवः, देशादिविप्लवः, विवाहः, भोजनं, शापः, मलत्यागः, मृत्युः, रतिः, दन्ताघातः, नखाघातः, अन्यदपि व्रीडाकरं कार्यं, शयनम्, अधरपानम्, नगराद्यवरोधनं, स्नानम्, अनुलेपनं चाङ्के न प्रदर्शनीयम् । अधिकविस्तारोऽप्यङ्कस्य न कार्यः । देव्याः परिजनादीनां प्रधानामात्यस्य वणिजां वा प्रत्यक्षैः चित्रैः चरित्रैः युक्तः अन्तनिष्क्रान्तनिखिलपात्रश्चाङ्को भाव्यः ।

( ख ) गर्भाङ्कः—प्रधानाङ्कमध्येऽपरोऽवान्तरार्थविच्छेदरूपोऽङ्कः गर्भाङ्कः । अयं रङ्गद्वारामुखादिमान् सबीजः फलवानपि कार्यः । यथा बालरामायणे—

'श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम्' ॥

( ग ) पूर्वरङ्गः—प्रथमं पूर्वरङ्ग एव नाटके नियोज्यः । तदनन्तरं सभापूजा, कविसंज्ञादिकथनं, नाटकनामकथनं प्रस्तावनादिकं च कार्यम् । नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशमनार्थं कुशीलवैः यत् क्रियते तदेव पूर्वरङ्गः । अस्य भूयांसि प्रत्याहारादिकानि अङ्गानि सन्ति । तथापि रङ्गविघ्नापनोदाय नान्दी अवश्यं कार्या ।

( घ ) नान्दी—आशीर्वचनसंयुक्ता देवद्विजनृपादिस्तुतिप्रयोजिका नान्दी भवति । तत्र मङ्गलद्योतकं शङ्खं, चन्द्रं, कमलं, चक्रवाकं श्वेतकमलं वा वर्णयति कविः । अष्टपदा द्वादशपदा वा भवतीयम् ।

( ङ ) काव्यस्थापना—पूर्वरङ्गं कृत्वा सूत्रधारे गते स्थापकः प्रविश्य दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं मर्त्यो भूत्वा मिश्रमन्यतरो भूत्वा सूचयेद् । सम्प्रति सूत्रधार एव सर्वं सम्पादयतीति परम्परा । भारतीवृत्त्या स रङ्गं प्रसाद्य नाटकस्य कवेश्च परिचयं प्रस्तौति ।

( च ) भारती—संस्कृतबहुलो वाक्यप्रधानो व्यापारो भारती । इयं चतुर्विधा भवति—१. प्ररोचना, २. वीथी, ३. प्रहसनम्, ४. आमुखञ्च । प्रशंसातः श्रोतृणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । वीथीप्रहसने तु पुरस्तात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्ष्यामः । नटी, विदूषकः, पारिपार्श्विको वा यत्र सूत्रधारेण सह संलापं करोति सा एव प्रस्तावना । आमुखं नामान्तरमस्याः ।

( छ ) **प्रस्तावना**—अस्या भेदाः पञ्च—

'उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्तकावगलिते पञ्च प्रस्तावनाभिदाः' ॥

प्रवेष्टुरभिप्रेतार्थे स्थापकस्याभिप्रेतार्थे उद्धन्यते अन्तर्लीयत इति उद्घात्यकः । सूत्रधारस्य वाक्यमर्थं वा समादाय यत्र पात्रप्रवेशः सः कथोद्घातः । एकस्मिन् प्रयोगेऽन्यः प्रयुज्यते चेत् तेन पात्रप्रवेशे प्रयोगातिशयः । ऋतुवर्णन-माध्यमेन पात्रप्रवेशे प्रवर्तकम् एकत्र समावेशात् कार्यान्तरसिद्धिर्यत्र भवति तत्रावगलितम् । यत्र नेपथ्योक्तं नभोभाषितं वा श्रुत्वा पात्रप्रवेशः तत्र नख-कुट्टाख्यः षष्ठोऽपि भवति भेद आमुखस्य ।

( ज ) **वस्तु**—प्रस्तावनान्ते वस्तुप्रयोगः कार्यः । इदं वस्तु द्विविधम्—१. आधिकारिकम् २. प्रासङ्गिकम् । फले स्वामित्वमेवाधिकारः । तत्प्रभुश्चाधिकारी । तस्य इतिवृत्तम् आधिकारिकम् । यथा—बालरामायणे रामचरितम् । अधिकारिण उपकारकं प्रासङ्गिकम् । यथा—रामचरितस्योपकारकं सुग्रीवादि-चरितम् ।

( झ ) **पताकास्थानकम्**—वस्तुनि पताकास्थानकं योज्यम् । चतुर्विध-मिदम्—१. यत्र गुणवती अर्थसम्पत्तिः सहसा उदेति तत् प्रथमम् । २. यत्र नानाबन्धसमाश्रयं सातिशयं श्लिष्टं वचः तद् द्वितीयम् । ३. श्लिष्टप्रत्युत्त-रोपेतं सविनयं लीनमर्थोपक्षेपकं तृतीयम् । ४. प्रधानार्थान्तरापेक्षि सुश्लिष्टं द्व्यर्थकं यत्र वचनं तत् चतुर्थं पताकास्थानकम् ।

( ञ ) **अनुचितवस्तुनिवेशप्रकारः**—नायकस्य रसस्य वाऽनुचितं वस्तु परित्याज्यम् । सत्यावश्यकेऽन्यथा प्रकल्पनीयम् । वर्षपर्यन्तमायिनी दिनद्वया-दिजा विस्तरा वा कथा अर्थोपक्षेपकैर्वाच्या ।

( ट ) **अर्थोपक्षेपकाः**—इमे पञ्च—१. विष्कम्भकः, २. प्रवेशकः, ३. चूलिका, ४. अङ्कावतारः, ५. अङ्कमुखम् । विष्कम्भकः अङ्कादौ प्रयोज्यः । स च संस्कृतात्मकः शुद्धः संस्कृतप्राकृतात्मकश्च सङ्कीर्णः । प्रवेशकः अङ्कद्वयमध्ये संस्कृतभिन्नभाषया नीचपात्रैः प्रयोज्यः । जवनिकाऽऽभ्यन्तरस्थैरर्थस्य सूचना चूलिका । अङ्कान्ते पात्रैः सूचितोऽङ्कः अङ्कावतारः । यत्र अङ्कानामखिला सूचना एकस्मिन्नेवाङ्के भवति बीजार्थख्यापकं तदङ्कमुखम् । अङ्कान्ते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रविष्टैः पात्रैः परवर्तिन अङ्कस्य अर्थसूचनात् अङ्कास्यं भवतीति धनिकः। विष्कम्भकाद्यैरपि अधिकारिणो वधो न वाच्यः, रसवस्तुनस्तिरोधानं वा न कार्यम् ।

( ठ ) **अर्थप्रकृतयः**—प्रयोजनसिद्धिहेतवः इमाः पञ्च—बीजम्, बिन्दुः, पताका, प्रकरी कार्यं च । स्वल्पं विसर्पि नायकमुख्योद्देश्यस्य प्रथमं कारणं बीजमुच्यते । अवान्तरार्थविच्छेदेऽपि अच्छेदकारणं बिन्दुः । व्यापि प्रासङ्गिकं वृत्तं पताका । पताकानायकस्य स्वकीयफलान्तरं न भवति । प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी । प्रकरी नायकस्यापि स्वकीयफलान्तरं न भवति । कर्तुमाकाङ्क्षितं स्वशक्त्या शक्यं यदुद्देश्यक आरम्भः यस्य सिद्धौ समापनं तत् कार्यम् ।

( ड ) **अवस्थाः**—प्रारब्धस्य कार्यस्य पञ्च अवस्थाः भवन्ति—आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः फलागमश्च । मुख्यफलसिद्धये औत्सुक्यमेवारम्भः । फलप्राप्तौ सत्वरो व्यापारः प्रयत्नः । फलसिद्धेः पाक्षिकी सम्भावना प्राप्त्याशा। विघ्ननाशात् निश्चिता फलप्राप्तिः नियताप्तिः । सर्वफलोदय एव फलागमः ।

( ढ ) **सन्धिः**—सन्धयः पञ्च—मुखं, प्रतिमुखं, गर्भः, विमर्शः, उपसंहृतिश्च । प्रधानफलान्वये सति अन्तरैकार्थसम्बन्धः सन्धिः । नानार्थरससम्भवा यत्र बीजोत्पत्तिः तदेव मुखसन्धिः । मुखसन्धौ निवेशिनः फलप्रधानोपायस्य लक्ष्यालक्ष्य इव यत्रोद्भेदः तत्प्रतिमुखम् । मुखे प्रतिमुखे च किञ्चित् प्रकाशितस्य फलप्रधानोपायस्य यत्र मुहुर्मुहुः ह्रासानुसन्धानवान् समुद्भेदः समुल्लसति तत्र गर्भसन्धिः । गर्भापेक्षया प्रकाशितः फलप्रधानोपायः यत्र सान्तरायो लक्ष्यते शापाद्यैः तत्र भवति विमर्शसन्धिः । कविना यथास्थानमुपन्यस्ताः कथावस्तु भागाः यत्र एकार्थमुपनीयन्ते तत्र उपसंहारः निर्वहणं वा ।

मुखसन्धौ—उपक्षेपः, परिकरः, परिन्यासः, विलोभनं, युक्तिः, प्राप्तिः, समाधानं, विधानं, परिभावना, उद्भेदोभेदः, करणं चाङ्गम् । प्रतिमुखे च—विकासः, परिसर्पः, विधुतं, तापनं, नर्म, नर्मद्युतिः, प्रगमनं, विरोधः, पर्युपासनं, पुष्पं, वज्रम्, उपन्यासः वर्णसंहारश्च । गर्भे च—अभूताहरणं, मार्गः, रूपम्, उदाहरणं, क्रमः, संग्रहः, अनुमानं, प्रार्थना, क्षिप्तिः, त्रोटकम्, अधिबलम्, उद्वेगो विद्रवश्चाङ्गाः । विमर्शाङ्गानि च सन्ति—अपवादः, सम्फेटो, व्यवसायो, द्रवो, द्युतिः, शक्तिः, प्रसङ्गः, खेदः, प्रतिषेधः, विरोधनम्, प्ररोचना, आदानं, छादनं च । निर्वहणाङ्गानि च—सन्धिः, विबोधः, ग्रथनं, निर्णयः परिभाषणम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतिः, प्रसादः, आनन्दः, समयः, उपगूहनम्, भाषणं, पूर्ववाक्यं, काव्यसंहारः, प्रशस्तिश्च ।

( ण ) अङ्गनिवेशफलम्—रसानुगुणानुरोधेन क्रान्तद्रष्टा कविः एकसन्धेरङ्गानि अन्यसन्ध्यादावपि कर्तुं सक्षमः । यतो हि रस एव मुख्यः । अङ्गहीनो नरः यथाऽऽरम्भाऽक्षमस्तथैवाङ्गहीनं काव्यमपि प्रयोगायोग्यं भवति । अनेनाङ्गनिवेशनेन षट्फलाप्तिः—१. अभीष्टविषयस्य रचना भवति । २. द्रष्टुरद्भुतवस्तुप्राप्तिः । ३. कथायाः विस्तरेण ज्ञानम् । ४. द्रष्टुरनुरागोदयः । ५. गोप्यविषयाणां गोपनम् । ६. प्रकाश्याणां च प्रकाशनम् । शास्त्रादेशपालनेच्छयाऽङ्गनिवेशो नोचितः । रसानुसारमेवाङ्गनिवेशनं कार्यम् । यतो हि स हि परा उपनिषत् । रसविरोधिः वृत्तादिकं कथमपि न कार्यम् ।

( त ) वृत्तीः—शृङ्गारे कैशिकी, वीरे सात्त्वती, रौद्रे बीभत्से च आरभटी, अन्यत्र भारती वृत्तिराश्रयणीया कविना । एताः नाट्यस्य मातृकाः । नर्म, नर्मस्फूर्जो, नर्मस्फोटो, नर्मगर्भश्चास्या कैशिक्या अङ्गानि । सात्त्वत्यास्तु—उत्थापकः, सांघात्यः, संलापः परिवर्तकश्च । आरभट्याश्च—वस्तूत्थापनं, सम्फेटः, संक्षिप्तिरवपातनं च । संस्कृतप्रायो नटाश्रयो वाग्व्यापारो भारती ।

( थ ) नाट्योक्तयः—१. स्वगतम्—सर्वैरश्राव्यम् । २. प्रकाशम्—सर्वश्राव्यम् । ३. अपवारितम्—स्थानान्तरं गत्वाऽन्यजनस्य श्रवणे बाधिकम् । ४. त्रिपताककरेण—उत्थिताङ्गुलित्रयकरेण कथनम् । ५. जनान्तिकम्—अन्यान् जनान् अपवार्य कथनम् । ६. आकाशभाषितम्—लक्ष्यपात्राभावाद् भाषितम् ।

विशेषः—पात्राणां सम्बोधनप्रकारः नाटकनामकरणप्रकारः भाषाविचारः लक्षण-नाट्यालङ्कृति-वीथी-लास्याङ्गानि च शास्त्रेषु प्रदर्शितानि कविविमर्शाय ।

( २ ) प्रकरणम्—अत्र वृत्तं लौकिकं कविकल्पितं वा भवति । शृङ्गार एव अङ्गी । विप्रः, अमात्यः वणिग् वा नायकः कार्यः धर्मलाभार्थासक्तः धीरप्रशान्तः । नायिका कुलजा, वेश्या द्वयं वा भवितुमर्हति । शिष्टं नाटकवद् ज्ञेयम् ।

( ३ ) भाणः—धूर्तचरितः नानावस्थान्तरात्मकः भाणः भवति । एक एवाऽत्राऽङ्कः । कुशल एक एव नटः । स चाकाशभाषितैः कथयति सर्वम् । वीरशृङ्गारौ चात्र रसौ । इतिवृत्तं कविकल्पितम् । वृत्तिः प्रायो भारती । मुखनिर्वहणे सन्धी । दशापि लास्याङ्गानि ।

( ४ ) व्यायोगः—अत्र कथानकं प्रसिद्धं स्त्रीपात्राणि स्वल्पसंख्यकाणि । गर्भविमर्शाभावः बहुनराश्रितः एकाङ्कः स्त्रीनिमित्तकसमरयुतः कैशिकीवृत्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रहितः प्रख्यातनायकः व्यायोगः । राजर्षिः दिव्यो वा नायकः धीरोदात्तः, हास्य-शृङ्गारशान्तेभ्यः भिन्नो रसोऽङ्गी भवत्यत्र ।

( ५ ) समवकारः—देवासुराश्रयं ख्यातं वृत्तं भवत्यत्र विमर्शसन्धेरभावः, अङ्कास्त्रयः, प्रथमे सन्धिद्वयम्, अन्तिमयोश्चैकैकम् । नायकाः द्वादशोदात्ताः प्रख्याताः देवाः मानवा वा । तेषां फलं च पृथक् वीरमुख्योऽखिलो रसः । स्वल्प-कैशिकी वृत्तिः भारत्यादयश्च । विन्दुप्रवेशकावत्र न करणीयौ । साङ्गा वीथी करणीया । गायत्र्युष्णिग् मुख्यानि विविधानि छन्दांसि । त्रिशृङ्गारः, त्रिकपटः त्रिविद्रवश्चात्र विधेयाः । प्रथमाङ्कगं वस्तु द्वादशनालीभिर्निष्पाद्यं द्वितीयाङ्कगं च त्रिनाडिकं तृतीयाङ्कगं च द्विनाडिकम् ।

( ६ ) डिमः—अत्र कथानकं ख्यातं मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादि-चेष्टितैः, अङ्गी रौद्रः सर्वे रसाः अङ्गानि । अङ्काश्चत्वारः । विष्कम्भकप्रवेशकौ न भवतः । नायकाश्चात्र षोडश—देवगन्धर्वयक्षरक्षोमहोरगाः भूतप्रेतपिशाचाद्याः कैशिकीहीना वृत्तयः, निर्विमर्शाः सन्धयः, शान्तहास्यशृङ्गारवर्जिता षड्रसाश्च ।

( ७ ) ईहामृगः—अयं मिश्रवृत्तः चतुरङ्कः मुखप्रतिमुखनिर्वहण-सन्धियुक्तो भवति । अत्र नरः दिव्यः वा नायकः प्रतिनायकः । तयोराद्यो धीरः अन्यश्चोद्धतः । स च मौढ्यात् अयुक्तकार्यकारी । उद्धताः दिव्या मर्त्या वा दशपताकानायकाः । प्रतिनायकवलं क्रोधमानीय नायकस्य व्याजात् युद्धं निर्वर्तयेत् कविः । नायको मृगवदलभ्यां नायिकामत्र ईहते ।

( ८ ) अङ्कः—अत्र प्राकृता नरा नेतारः, रसः करुणः, बहुस्त्रीविलापः, कथानकं प्रख्यातं कविकल्पितं वा । भाणवदत्र सन्धिवृत्तिलास्याङ्गानि । नायक-प्रतिनायकयोः जयपराजयौ वर्णनीयौ वाग्युद्धमपि स्वतिरस्कारबोधकं वाक्यं च ।

( ९ ) वीथी—एक एवाङ्कोऽत्र एक एव नायकः । आकाशभाषितैः नटः शृङ्गारप्रचुरं रसान्तरमपि सूचयति । मुखनिर्वहणे सन्धी अखिला अर्थप्रकृतय-श्चात्र भवन्ति । अस्यास्त्रयोदशाङ्गानि उद्घात्यकादीनि ।

( १० ) प्रहसनम्—भाणवदत्रापि सन्धिसन्ध्यङ्गलास्याङ्गादिकं भवति । निन्द्यकथानकं कविकल्पितं भाव्यम् । अत्र आरभटी, विष्कम्भकप्रवेशकौ, वीथ्य-ङ्गानि च न भवन्ति । हास्य एवाङ्गी ।

उपरूपकाणि—नाटिकायां कविकल्पितं वृत्तं, नटीबाहुल्यमङ्कचतुष्टयं कैशिकी-प्राधान्यम् । त्रोटके सप्ताष्टनवपञ्चाङ्काः दिव्यमानुषसंश्रया सविदूषकाः भवन्ति । गोष्ठ्यां साधारणाः नव दश वा नायकाः, कैशिकीवृत्तिः, गर्भविमर्शाभावः, पञ्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षड् वा नायिकाः कामशृङ्गाररसंयुक्ताः। सट्टके संस्कृतरहितं पाठ्यं विष्कम्भक-प्रवेशकाभावः जवनिकाख्याश्चाङ्काः भवन्ति रसश्चाद्भुतः। नाट्यरासके बहुताललयादिकं भवति एक एवाङ्कः, नायक उदात्तः पीठमर्दश्चोपनायकः। हास्योऽङ्गी सशृङ्गारः। नायिका वासकसज्जा मुखनिर्वहणे सन्धी दश लास्याङ्गानि च। प्रस्थानके नायको दासः। तस्मादपि हीनः उपनायकः। दासी च नायिका वृत्तिः कैशिकी भारती च। अङ्कौ द्वौ सुरापानादिना समाप्तिः। उल्लाप्ये नायक उदात्तः वृत्तं दिव्यम् एक एवाङ्कः हास्यशृङ्गारकरुणरसाः। काव्यं च आरभटीहीनमेकाङ्कं हास्यसङ्कुलम् उदात्तनायकं मुखप्रतिमुखनिर्वहणसन्धिकम्। प्रेङ्खणे गर्भविमर्शाभावः हीनो नायकः। एक एवाङ्कः सूत्रधारविष्कम्भकप्रवेश-करहितं सर्ववृत्तियुक्तत्वं च। रासके पञ्च पात्राणि, मुखनिर्वहणे सन्धी, भारती कैशिकी वृत्तिः, भाषाविभाषाबाहुल्यं, सूत्रधाराभावः, एक एवाऽङ्कः, नायिका ख्याता नायकश्च मूर्खः। संलापके त्रयः चत्वारो वाङ्काः भवन्ति। नायकः धर्मद्रोही शृङ्गारकरुणेतरः रसः, भारती-कैशिकीवृत्तिरहितैः। श्रीगदिते लक्ष्मीवेशधारिणी नटी गायति। एक एव अङ्कः भारती च प्रायेण वृत्तिः। शिल्पके चत्वारश्चाङ्काः, चतस्रो वृत्तयः, शान्तहास्यरहिता रसाः भवन्ति नायकः ब्राह्मणः। नीचजातीय-श्चोपनायकः। अस्य सप्तविंशति (२७) अङ्गानि भवन्ति। विलासिकायां शृङ्गारबाहुल्यमेक एवाङ्कः दश लास्याङ्गानि विदूषकविटपीठमर्दाश्च भवन्ति। दुर्मल्लिकायां चत्वारोऽङ्काः, कैशिकी भारती च वृत्तिः नायकश्च न्यूनो भवति। प्रकरणिकायां वणिक्, पुरोहितः, मन्त्री पथिको वा नेता। हल्लीशे एक एवाङ्कः, सप्ताष्टौ वा स्त्रियः, एक एव नायकः, कैशिकी वृत्तिश्च। भाणिकायाम् एक एवाऽङ्कः, कैशिकीभारतीवृत्तिः, नायिका उदात्ता नायकश्च नीचः। इयं सप्ताङ्गाः।

**वैशिष्ट्यम्**—भारतीयनाट्यरचनायाः प्रयोजनं नितान्तं गम्भीरं व्यापकं सार्वभौमञ्चास्ति। कोऽपि नाटककारोऽन्यायनिर्दयतानृशंसताकदाचाराद्यसद्-भावान् प्राधान्यत्वेन आङ्ग्लनाटकवन्न प्रस्तौति। सदैव न्यायस्य कृपायाः परोपकारस्य सदाचारादेरेव विजयं प्रस्तौति। किन्तु यथार्थानुभवं न व्यनक्तीत्यपि वक्तुं नोचितम्। युवकस्य दुष्यन्तस्य हृदये शकुन्तलां दृष्ट्वाऽनुभूता कामवासना, सागरिकां प्रति वासवदत्तयाऽनुभूतेर्ष्या, वेण्यां भीमस्य क्रोधः यथार्थानुभवस्यैवा-भिव्यक्तिः। आशावादो जीवनस्य मूलमन्त्रम्। भावनयाऽनया दुःखान्तस्य नाटकस्य अभावः। भारतीयाः जीवनं समग्ररूपेण पश्यन्ति। भावनया चानया सुखान्तनाटकपरम्परा। समानस्य प्रत्येकवर्गस्य प्रतिनिधित्वमपि नाटके

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाहुल्येन दृश्यते। इदमस्यापरं वैशिष्ट्यं सर्वमिदमवधार्यैवोक्तं—'नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्।'

दृश्यत्वेन श्रव्यकाव्यात् विशिष्टं नाटकम्। अवस्थानुकारेण सर्वेन्द्रियहरत्वेन च नाटकेऽनुभूता विशिष्टा रमणीयता सामाजिकैः। अत एवोक्तं 'काव्येषु नाटकं रम्यम्'। नाटकलेखनमपि सर्वोत्कृष्टं कर्म स्वीकृतं समालोचकैः नाटकान्तं कवित्वमिति भणद्भिः। रूपकं हृदयस्य सुकुमारतमाऽभिव्यक्तिः।

## ( १३ ) वक्रोक्तिः काव्यजीवितम्

अथवा

## वक्रोक्तेरुद्भवविकासौ समीक्षणीयौ

वक्रोक्तिसम्बन्धीविचारधारायाः श्रीगणेशो मिलति भामहे। यद्यपि तत्रालङ्कारस्यैव प्राधान्यं तथापि वर्ततेऽङ्कुरोऽपि वक्रोक्तिसम्प्रदायस्य। तन्मते वक्रार्थप्रतिपादकशब्दप्रयोगादेवालङ्कारता। यथोक्तम्—

'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते'।

वक्रोक्तेरभावादेव स हेतोरलङ्कारतां खण्डयति। लोचनकारोऽपि स्वीकरोति वक्रोक्तिम्—'शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणावस्थानमिति' वदन्। दण्डिरपि पुष्णाति विचारममुम्—

'श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।
भिन्नं द्विधा समासोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्'॥

रुद्रटादिभिरपि नवीनं किञ्चिदपि न कथितं तथापि समर्थितं वक्रोक्तिमार्गम्। किन्त्वस्य सम्प्रदायरूपेण प्रवर्तकस्तु कुन्तक एव। तस्य चैका रचना 'वक्रोक्तिजीवितमि'ति।

कुन्तकः—प्राप्तोऽयं ग्रन्थ आचार्यस्य अपूर्ण एव। तत्रादौ किमपि न लिखितं तेन स्वजीवनविषये। अन्तिमश्चांशोऽप्राप्य एव। अतोऽभावोऽस्ति आभ्यन्तरप्रमाणस्य। किन्तु समुद्धृतमनेन ध्वन्यालोकात् बहु ( १।४, २।५ )। अतोऽयं परवर्ती तस्मादिति अनुमिनुमः। राजशेखरस्य बालरामायणादपि दत्तान्युदाहरणानि प्रकरणवक्रताप्रसङ्गे। अत एव सिद्धयति पूर्ववर्तिता राजशेखरस्य। नवमशताब्द्याः उत्तरार्धे दशमशताब्द्याश्च पूर्वार्धे निर्णीतो राजशेखरस्य कालः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[1]इतिहासकारैरन्यैश्च[2]। अतः कुन्तकस्य जीवनारम्भः दशमखिस्ताब्दस्योत्तरार्धं एव स्वीकर्तव्यः। शैवोऽयमिति ज्ञायते ग्रन्थप्रार्थनया।

**वक्रोक्ति-जीवितम्**—प्रबन्धोऽयमपूर्णः। अत्र चत्वार उन्मेषाः सन्ति। कारिकासु सिद्धान्तं प्रतिपादितम्। तद् व्याख्यानं च वृत्तिभागेऽस्ति। केषाञ्चिद् विदुषां मतेऽस्य नाम 'वक्रोक्तिजीवितम्' अस्ति, यतो हि लिखितं द्वितीय-तृतीयोन्मेषान्ते 'वक्रोक्तिजीविते' इति। केषाञ्चिन्मते तु द्वितीयकारिकानुसारं कारिकाभागस्य नाम अस्ति 'काव्यालङ्कारः', वृत्तिभागस्य च 'वक्रोक्तिजीवितम्'[3] इति। किन्तु परवर्तिनि वक्रोक्तिजीवितकाररूपेणैव स्मृतः कुन्तकः।

प्रथमोन्मेषे वक्रताया षड्विधत्वं दर्शितम्। द्वितीये वर्णविन्यासवक्रतायास्त्रैविध्यं प्रदर्श्य क्रियावैचित्र्यवक्रतादिकं दर्शितम्। तृतीये रमणीयतायाः भेदद्वयमुक्त्वा पुनर्द्वैविध्यं प्रदर्शितं साकमलङ्कार्यतया। चतुर्थे च प्रकरणवक्रता प्रबन्धवक्रता च निरूपिता। अग्रे खण्डितो ग्रन्थः।

**वक्रोक्तिः काव्यजीवितम्**—भामहेनालङ्काराणां मूलोत्सरूपेण स्वीकृता, वामनेन सादृश्यमूललक्षणाऽर्थालङ्काररूपेण, रुद्रटेन शब्दालङ्काररूपेण चाभिमता वक्रोक्तिः कुन्तकेन काव्यस्यात्मा कथिता। तन्मते वैदग्ध्यभङ्गीभणितिरेव वक्रोक्तिः, वक्रा = जनसामान्यकथनभिन्ना लोकोत्तरचमत्कारशालिनी उक्तिः भणितिः कथनं वा। इत्थं लोकोत्तरचमत्कारपूर्णकथनमेव वक्रोक्तिः न च सामान्यजनाभिव्यञ्जिता साधारणा वाक्—

'अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम्।
परिसरणमरुणचरणे! रणरणकमकारणं कुरुते'॥

प्रतिभादारिद्र्यमेवात्र न वैचित्र्यम्। यथा चोक्तम्—'अत्र हि शुष्कतर्कवाक्यवासनाधिवासितचेतसा प्रतिभाप्रतिभातमात्रमेव वस्तु व्यसनितया कविना केवलमुपनिबद्धम्। न पुनर्वाचकवक्रताविच्छित्तिलवोऽपि लक्ष्यते'।

वक्रोक्तिः षड्विधा—१. वर्णविन्यासवक्रता, २. पदपूर्वार्द्धवक्रता, ३. प्रत्ययाश्रितवक्रता, ४. वाक्यवक्रता, ५. प्रकरणवक्रता, ६. प्रबन्धवक्रता च।

( १ ) **वर्णविन्यासवक्रता**—वर्णानां विन्यासो वर्णविन्यासः, अक्षराणां

---

१. वा० गैरोला—संस्कृत साहित्य का इतिहास पृ० ८१८।
२. परमेश्वरदीन पाण्डेय—वक्रोक्तिजीवितम्, भूमिका पृ० ९।
३. डा० काणे।

CC-0: Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशिष्टन्यसनं तस्य वक्रत्वं प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येणोपनिबद्धः सन्निवेशविशेषविहितः तद्विदाह्लादकारी शब्दशोभातिशयः । यथा—

'प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वी कपोलतलद्युतिः ।
प्रसरति ततो ध्वान्तक्षोदक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः' ॥

एतदेव चिरन्तनेष्वनुप्रास इति प्रसिद्धम् । त्रैविध्यमस्याः स्वीकृतं द्वितीयोन्मेषे ।

( २ ) पदपूर्वार्धवक्रता—पदस्य सुबन्तस्य तिङन्तस्य वा यत् पूर्वार्धं प्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता विन्यासजन्यविचित्रता । यथा—

'रामोऽस्मि सर्वं सहे' ।

अत्र रूढिशब्दस्यैव प्रस्तावसमुचितत्वेन वाच्यप्रसिद्धधर्मान्तराध्यारोपगर्भत्वेन निबन्धः । द्वादशविधेयं संक्षिप्तमग्रे वक्ष्यामः ।

( ३ ) प्रत्ययाश्रितवक्रता—प्रत्ययः सुप् तिङ् च यस्याश्रयस्तस्य संख्याकारकपुरुषादिवैचित्र्यविहितः यस्मिन् वचनवैचित्र्यं काव्यबन्धशोभायै निबध्यते । यथा—

'मैथिली तस्य दाराः' ।

षड्विधेयमग्रे वक्ष्यामः सङ्क्षेपेण ।

( ४ ) वाक्यवक्रता—पदसमुदायभूतवाक्यस्यापि भवति वक्रता सहस्रधा । यथोक्तम्—

'वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा ।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति ॥'

समुदायवैचित्र्यनिबन्धनोऽयं भेदः । यथा—

'उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः ।
त्वमाश्रयं प्राप्य तया नु कोपात् सोढाऽस्मि न त्वद्भवने वसन्ती ॥'

कविप्रतिभानामानन्त्यात् अनन्तत्वमस्य भेदस्य ।

( ५ ) प्रकरणवक्रता—प्रबन्धैकदेशे प्रकरणे यादृशोऽस्ति वक्रभावः सः सहजाहार्यसौकुमार्यमनोहरः । यथा—

'रामायणे मारीचमायामयमाणिक्यमृगानुसारिणो रामस्य करुणाक्रन्दकर्णनकान्तरान्तःकरणया जनकराजपुत्र्यास्तत्प्राणपरित्राणाय स्वजीवितपरिरक्षानिरपेक्षया लक्ष्मणो निर्भर्त्स्य प्रेषितः ।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(६) प्रबन्धवक्रता—प्रबन्धे वक्रभावः प्रबन्धवक्रता—यथा कुत्रचिन्महाकविविरचिते रामकथोपनिबन्धे—'नाटकादौ पञ्चविधवक्रतासामग्रीसमुदायसुन्दरं सहृदयहृदयहारि महापुरुषवर्णनमुपक्रमे प्रतिभासते परमार्थतस्तु विधिनिषेधात्मकधर्मोपदेशः पर्यवस्यति रामवत् प्रवर्तितव्यं न रावणादिवत् ।'

पदपूर्वार्धवक्रतायाः भेदाः

| भेदाः | उदाहरणानि |
| --- | --- |
| (१) रूढिवैचित्र्यवक्रता— | 'रामोऽस्मि सर्वं सहे ।' |
| (२) पर्यायवक्रता— | 'वामं कज्जलवद्विलोचनमुरो रोहद्विसारिस्तनमि'त्यादि । अत्र 'स्मररिपोः ।' इत्यादौ |
| (३) उपचारवक्रता— | 'हस्तापचेयं यशः ।' |
| (४) विशेषणवक्रता— | 'दाहोऽम्भः प्रसृतिपचः प्रचयवान् वाष्पः प्रणालोचित' इत्यादि । |
| (५) संवृत्तिवक्रता— | 'सोऽयं दम्भधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः ।' |
| (६) वृत्तिवैचित्र्यवक्रता— | 'मध्येऽङ्कुरं पल्लवाः' वा 'पाण्डिम्नि मग्नं वपुः ।' |
| (७) लिङ्गवैचित्र्यवक्रता— | मैथिली तस्य दाराः । |
| (८) क्रियार्थवैचित्र्यवक्रता— | 'रुद्रस्य तृतीयनयनं पार्वती परिचुम्बितं जयति ।' |

(९) पदमध्यान्तरभूतवक्रता, (१०) भाववैचित्र्यवक्रता, (११) उपसर्गनिपातजनितवक्रता (१२) वस्तुपदार्थवक्रता चापि भवति ।

प्रत्ययाश्रितवक्रतायाः भेदाः

| भेदाः | उदाहरणानि |
| --- | --- |
| (१) संख्यावैचित्र्यवक्रता— | 'मैथिली तस्य दाराः' 'वा फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकरः ।' |
| (२) कारकवैचित्र्यवक्रता— | 'स्तनद्वन्द्वं मन्दं स्नपयति बलाद् बाष्पनिवहो' इत्यादि । |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ३ ) पुरुषवैचित्र्यवक्रता— 'अस्मद् भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्' इति ।

( ४ ) कालवैचित्र्यवक्रता, ( ५ ) उपग्रहवक्रता, ( ६ ) प्रत्ययविहित-प्रत्ययवक्रतादयोऽपि प्रकाराः सम्भवन्ति ।

**कुन्तकस्य वैशिष्ट्यम्**—१. पूर्वाचार्य्यैः कृतानि लक्षणानि खण्डयित्वा स्वाभिमतलक्षणकरणमलङ्काराणाम् । २. रूपकादीनां विंशत्यलङ्काराणामेवा-लङ्कारत्वस्वीकृतिः । ३. ऊनविंशत्यलङ्काराणामलङ्कारत्वनिरसनं प्रेयसादीनाम् । ४. रसवदलङ्कारस्य पूर्वैः स्वीकृतस्य अलङ्कार्यत्वरूपेण व्यवस्थापनम् । ५. पूर्व-स्वीकृतरीतिखण्डनमानन्त्यात् उत्तममध्यमाधमभेदकल्पनं च । ६. काव्यकारण-भूतमार्गाणां सुकुमारविचित्रोभयात्मकत्वेन स्वीकृतिः । ७. मार्गाणां गुणस्वी-कृतिः । ८. स्पन्दशब्दस्यातिविशिष्टार्थाभिव्यक्तिः । ९. गुणरीत्यलङ्काराणां वक्रोक्तावेवान्तर्भावः । रसस्य ध्वनेरलङ्कारस्य च वक्रोक्तावेवान्तर्भावनं दृष्ट्वा कथितम्—'वक्रोक्तिः काव्यजीवितमि'ति । सूक्ष्मेक्षिका तु आचार्यस्य श्लाघ्या किन्तु परवर्तिभिर्नानुगता कथमिति न जानीमः ।

## ( १४ ) रीतिरात्मा काव्यस्य

( १९७९ )

अथवा

## रीतिसम्प्रदायस्योद्भवविकासौ समीक्षणीयौ

( १९८३ )

( क ) **परम्परा**—रीतिस्तु पन्थाः मार्गो वा । स च द्विविधः—१. वैदर्भ-मार्गः २. गौडीयमार्गश्च । प्रथमः प्रशस्यः परश्च निन्दनीय आसीत् इति भामहादपि पूर्ववर्तिनामियं धारणा । भामहश्च प्रशंसानिन्दाभ्यां दूरं वसन् गुणोपरि ध्यानमदात् । दण्डिना मार्गाविमौ विस्तृतं व्याख्यातौ । प्रथमस्य स्पृह-णीयता च प्रोक्ता । वामनस्तु रीतेः काव्यात्मत्वं स्वीचकार । दण्डिमते द्विविधा रीतिरत्र त्रिविधत्वं जगाम । यथा—१. वैदर्भी, २. गौडी ३. पाञ्चाली च । प्रथमा दशगुणयुता, द्वितीया ओजःकान्तिप्रधाना, तृतीया च माधुर्यसौकुमार्य-बहुला । राजशेखरेण कर्पूरमञ्जर्यां मङ्गलेऽपि तिस्रो रीतयो लिखिताः । तद्यथा—( क ) वैदर्भी, ( ख ) मागधी, ( ग ) पाञ्चालिका च । रुद्रटेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लाटीयाऽपि नवा रीतिः स्वीकृता। भोजेन रीतिषट्कत्वमभिव्यक्तम्—आवन्ती, मागधी, लाटी, पूर्वोक्ताश्च तिस्रः। किन्तु काव्यजगति वामनोक्तरीतित्रयस्यैव समादरः। गुणसमानमेवास्यालङ्कारोद्भावनाऽपि नितान्तं मौलिकी सुन्दरी च। रीतिसम्प्रदाये काव्यसिद्धान्तानां विशेषो विकासो लक्ष्यते काव्यात्मविवेचने च मार्मिकता। काव्यतत्त्वोन्मीलने रीतिसम्प्रदायमहत्त्वमानन्दवर्धनेनाऽपि स्वीकृतम्। गुणालङ्कारपार्थक्यप्रदर्शने रीतिमार्गस्य नैपुण्यं सुविदितमेव। वामनेन काव्येऽलङ्कारापेक्षया गुणानां महत्त्वं प्रतिपादितम्। तन्मते काव्यशोभायाः कर्तारो धर्मा गुणाः। अलङ्काराश्च तदतिशयवृद्धिहेतवः। गुणाश्च नित्याः। काव्ये तेषां स्थानमावश्यकम्। वामनमते रस आभ्यन्तरधर्मोऽस्ति काव्यस्य। आलङ्कारिकाणां मते च वहिरङ्गधर्मोऽस्ति। वामनः कान्तिनामके गुणेऽन्तर्भावयति रसम्। अविवक्षितवाच्यध्वनिञ्च वक्रोक्तौ। ध्वनिसमर्थकैरपि स्वीकृतो रीतिमार्गः। कुन्तकस्य रीतिव्यवस्था परम्परातो भिन्ना। कविस्वभावसम्बद्ध एव रीतिमार्गोऽङ्गीकृतस्तेन। वर्तमानरीतिनामकरणं भौगोलिकाधारेषु कृतम्। परन्तु कुन्तको न स्वीकरोति नाम न वाऽऽधारमेव। तन्मते नाम अस्ति—

१. सुकुमारमार्गः—( वैदर्भी रीतिः )।
२. विचित्रमार्गः—( गौडी रीतिः )।
३. मध्यममार्गः—( पाञ्चाली रीतिः )।

( ख ) **प्रवर्तकः**—वामनोऽस्ति प्रवर्तको रीतिमार्गस्य। कल्हणमतेऽयमासीत् मन्त्री काश्मीराधिपतेः जयापीडस्य[1]। बूलरोऽपि तमेवानुकरोति[2]। अत एवायमासीदष्टमशताब्द्यामिति विदुषां विचारः[3]। आस्तां वामनोद्भटौ जयापीडस्याश्रितौ किन्तु न लिखितं केनाप्यपरसम्बन्धे किमपि कुत्रचित्। काव्यशास्त्री वामनो भिन्नो वैयाकरणाद् वामनादिति गैरोला।[4]

( ग ) **रचना**—काव्यशास्त्रमर्मज्ञस्य वामनस्य एक एव ग्रन्थो मिलति 'काव्यालङ्कारसूत्र'-नामा। अस्योपरि विद्यते गोपेन्द्रत्रिपुरहरभूपालस्य टीका

---

१. राजतरंगिणी ४।४८।
२. काश्मीर रिपोर्ट, पृ० ६५।
३. पोद्दार—संस्कृत साहित्य का इतिहास, पृ० १५२, डॉ० नगेन्द्र—भारतीय काव्यशास्त्र की भूमिका, पृ० ६९।
४. संस्कृत साहित्य का इतिहास, पृ० ८१६।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'कामधेनु'-नामिका। बुधैरन्विष्टा महेश्वरप्रणीता 'साहित्यसर्वस्व'नामिका व्याख्यापि[1] काव्यालङ्कारसूत्रोपरि।

( घ ) सारांशः—वामनमते काव्यस्यात्माऽस्ति रीतिरेव। यथोक्तम्—'रीतिरात्मा काव्यस्य' ( १।२।६ )। पदानां विशिष्टा रचना एव रीतिः। यथोक्तम्—'विशिष्टा पदरचना रीतिः।' इयमेव रीतिः शैलीत्यप्युच्यते। पदेषु वैशिष्ट्यं तु गुणादेव जायते। अत एव रीतिर्गुणाश्रिता। कारणादस्मादेव रीतिमार्गस्यापरमभिधानमस्ति गुणसम्प्रदायः। गुणालङ्कारयोः सीमाङ्कनं सर्वं प्रथमं वामन एव प्रस्तौति। भरतप्रतिपादितानां दशसंख्यकानां गुणानां स्थितिरत्रापि तथैव। तन्नामका नामेवार्थंगुणानां स्वीकारे वैशिष्ट्यमस्य। नामान्येषां च—

'श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजः कान्तिः समाधयः'॥

एते दशसंख्यकाः गुणाः। वामनमतेन शब्दगतत्वेनार्थंगतत्वेन चेमे विंशतिसंख्यकाः भवन्ति। अभिधानं तु तदेव, किन्तु स्वरूपे महदन्तरम्। वैदर्भीप्रतिपत्तौ दशगुणानामावश्यकताऽत्यधिका। गौडयां तु ओजः-कान्त्योरावश्यकताऽस्ति। पाञ्चाल्यां च माधुर्यप्रसादयोः। दण्डिनाऽपि प्रोक्तम्—

'इति वैदर्भमार्गस्य प्राणा दशगुणा स्मृताः।'

वामनमते गुणालङ्कारयोः भेदोऽस्ति। यथोक्तम्—काव्यशोभायाः कर्तारो धर्माः गुणाः तदतिशयहेतवोऽलङ्काराः। चिन्तनमिदं सूक्ष्मं विशिष्टं गहनं च। नवीनता मौलिकता चास्ति। किन्तु मतमिदं नानुकृतं परवर्तिभिः। भामहस्यैव मतमनुकृतम्। मम्मटः, हेमचन्द्रः, विश्वनाथादयश्च गुणत्रयमेव स्वीकृतवन्तः। कुत्रचिद् इमे त्रितये एवान्तर्भवन्ति, क्वचिद् दोषत्वं यान्ति क्वचिच्च दोषाभावरूपताम्। भोजराजः किञ्चिदनुकरोति वामनम्। तन्मते गुणाः चतुर्विंशतिसंख्यकाः। ते च त्रिविधाः—( क ) बाह्यगुणाः, ( ख ) आन्तरगुणाः ( ग ) वैशेषिकगुणाश्च।

( ङ ) रीतिरात्मा काव्यस्य—वामनः स्वीकरोति प्रधानत्वं रीतीनाम्। तन्मते काव्यस्य आत्मा रीतिरेव। रीतीनां गुणाश्रितत्वं गुणानां च रसधर्मत्वमङ्गीकृत्य काव्यात्मरूपेणावतारिता रीतिरत्र। मम्मटमते तु नास्ति भेदः रीतौ

१. इण्डिया आफिस कैटलाग, पृ० ३२१।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृत्तौ वा। किन्त्वस्ति भेदोऽत्र सूक्ष्मेक्षिकयेति डा० जगदीशचन्द्रमिश्रः। तथाहि वृत्तीनां विभाजनं रचनायाः गुणोपरि वर्तते। रीतीनां वर्गीकरणं देशस्य प्रान्तस्य वाऽऽधारेण भवति[1]। रुय्यको बोधयति सर्वमिदं स्पष्टतया। राजशेखरमते तु देशविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिश्च। सरस्वतीकण्ठाभरणानुसारं रीतीनां सम्बन्धो बाह्यवर्णविन्यासैरेवाधिकः। गुणानां नित्यता अलङ्काराणां चानित्यताऽस्ति रीतिमार्गस्य महनीययोगदानं काव्यशास्त्रविकासे।

## ( १५ ) अनौचित्याद्दते नान्यद् रसभङ्गस्य कारणम्।

अथवा

## औचित्योपनिबन्धस्तु रसस्योपनिषत् परा।

( १९७८ )

अथवा

## औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्

**( क ) परम्परा**—भरतस्य नाट्यशास्त्रं सर्वकलामान्यसिद्धान्तसमीक्षणम्। औचित्यमपि तद्दृष्टिदूरापेतं नासीदिति अनुमिनुमः प्रवृत्तिवर्णनप्रसङ्गात्। लोकपरम्परोल्लङ्घनं स कथमपि न सहते। तत्पालने च कविं प्रेरयति। उदाहरति च—

'मेखलोरसिबन्धे च हास्यायैवोपजायते।'

मेखला कटिभूषणम्। उरसि तन्निबन्धनं यथा हास्यकरं भवति तथैवानौचित्यमपि। तत्त्वममुमादायैवालङ्कारिकैर्व्याख्यातमौचित्यतत्त्वं यथामति यथावसरं च स्व-स्वग्रन्थे। भामहोऽपि स्वीकरोति भङ्ग्येन औचित्यसिद्धान्तम्। दोषः सदा दोषाय न कल्पते। यथा—

'सन्निवेशविशेषात्तु दुरुक्तमपि शोभते।
नीलं पलाशमाबद्धमन्तराले स्रजामिव॥
किञ्चिदाश्रयसौन्दर्याद् धत्ते शोभामसाध्वपि।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम्॥

---

१. अलङ्कारशास्त्रस्येतिहासः, पृ० २९।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भयशोकाभ्यसूयासु हर्षविस्मययोरपि ।
यथाह गच्छ गच्छेति पुनरुक्तं न तद्विदुः ॥'

मालामध्यगुम्फितपलाशवत् दुरुक्तमपि न दोषाय । नयनन्यस्ताञ्जनवदसाध्वपि गुणावहं भवति । भयशोकादौ पुनरुक्तमपि गुणकरं भवतीत्युक्त्वा तेन समर्थितमौचित्यम् । दोषनिरूपणप्रसङ्गे दण्डिनाऽपि स्वीकृतमौचित्यमिति स्वीकरणे न काचिद् विप्रतिपत्तिः । यथा—

'समुदापार्थशून्यं यत् तदपार्थमितिष्यते ।
उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति ॥'
'विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥'

एतेनानुमीयतेऽनौचित्यमेव दोषत्वमिति तस्य सिद्धान्तः । औचित्यपदस्य प्रथमः प्रयोक्ता कान्यकुब्जाधिपतिर्भवभूति-वाक्पतिराजयोराश्रयदाता यशोवर्मा । भोजराजेन शृङ्गारप्रकाशेऽद्यानुपलब्धरामाभ्युदयनामकनाटकाद् गृहीतेऽस्मिन् श्लोके समर्थयति सिद्धान्तमौचित्यस्य—

'औचित्यं वचसां प्रवृत्त्यनुगतं सर्वत्र पात्रोचिता
पुष्टिः स्वावसरे रसस्य च कथामार्गे न चातिक्रमः ।
शुद्धिः प्रस्तुतसंविधानकविदौ प्रौढिश्च शब्दार्थयोः
विद्वद्भिः परिभाव्यतामविहितैरेतावदेवास्तु नः ।'

महाकाव्ये समरसतां स्वीकुर्वाणो नाट्यशास्त्रस्य मान्यो व्याख्याता रससम्बन्धे चोत्पत्तिवादसंस्थापको भट्टलोल्लटोऽपि औचित्यं समर्थयति—'अस्तु नाम निस्सीमा अर्थसार्थः । किन्तु रसवत एव निबन्धो युक्तः न तु नीरसस्य' इति अपराजितिः । यदाह—

'मज्जनपुष्पावचयनसन्ध्याचन्द्रोदयादिवाक्यमिह ।
सरसमपि नातिबहुलं प्रकृतरसेनान्वितं रचयेत् ॥
यस्तु सरिदद्रिसागरपुरतुरगरथादिवर्णने यत्नः ।
कविशक्तिख्यातिफलो विततधियां नो मतः स इह ॥
यमकानुलोमतदितरचक्रादिभिदोऽतिरसविरोधिन्यः ।
अभिमानमात्रमेतद् गड्डरिकादि प्रवाहो वा ॥'

आद्यौ पद्यौ राजशेखरेण काव्यमीमांसायां नवमेऽध्याये अपराजितिनाम्नाऽन्तिमौ च हेमचन्द्रेण काव्यानुशासने भट्टलोल्लटनाम्ना समुद्धृतौ । मन्ये पितुर्नाम अपराजित इति तदपत्यम् चापराजितिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रसपोषका एवालङ्काराः काव्ये ग्राह्याः नापोषका इति काव्यालङ्कारस्य द्वितीयाध्यायेऽनुप्रासप्रयोगनिदर्शनविधौ प्रतिपाद्य समर्थयति औचित्यं रुद्रटः । यथा—

'एताः प्रयत्नादधिगम्य सम्यगौचित्यमालोच्य तथार्थसार्थम् ।
मिश्राः कवीन्द्रै रचनाल्पदीर्घाः कार्या मुहुश्चैव गृहीतमुक्ताः ॥'

आनन्दवर्धनस्तु अलङ्कारशास्त्रसर्वाङ्गैः सह प्रदर्शयति गुरुतरसम्बन्धमधिकमौचित्यस्य । वस्त्वलङ्कारादयस्तु रसस्य बाह्यपरिधानमात्रम् । अत एव सः प्रदर्शयति अलङ्कारस्य, गुणस्य, सङ्घटनस्य, प्रबन्धस्य, रसस्याप्यौचित्यम् । यतो हि रस अलङ्कार्यः । यथोक्तम्—

'रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥'

रसानुकूलशब्दार्थयोरौचित्यपूर्णयोजनमेव कर्म कवीनामिति कथयति स तृतीयोद्योते—

'वाच्यानां वाचकानाञ्च यदौचित्येन योजनम् ।
रसादिविषयेणैतद् मुख्यं कर्म महाकवेः ॥'

इत्थं ध्वनिकृता औचित्यचर्चा कृता सर्वाधिका ।

ध्वन्यालोकस्य टीकाकारोऽभिनवगुप्तोऽपि लोचने स्वीकरोति महत्त्वमौचित्यस्य । यथा—'तथा ह्यचेतनं शवशरीरं कटककुण्डलाद्युपेतमपि न भाति अलङ्कार्यस्याभावात् । यतिशरीरं कटकादियुक्तं हास्यावहं भवति अलङ्कार्यस्यानौचित्यात् ।' यथा वा—'औचित्यवती अतिशयोक्तिः जीवितमिति चेद् औचित्यनिबन्धनं रसभावादिमुक्त्वा नान्यत् किञ्चिदस्ति इति ।'

'अपद'-विरसादिदोषनिरूपणप्रसङ्गे भोजराजेनापि स्वीकृतमौचित्यम् । कुन्तकेनापि काव्यात्मरूपेण स्वीकृतायाः वक्रोक्तेः मूलमौचित्यमेव । यथोक्तम्—

'आञ्जसेन स्वभावस्य महत्त्वं येन पोष्यते ।
प्रकारेण तदौचित्यमुचिताख्यानजीवितम् ॥'

व्यक्तिविवेककारो महिमभट्टोऽपि भङ्ग्या स्वीकरोति महत्त्वमौचित्यस्य । यथा—'तस्य ( अनौचित्यस्य ) काव्यस्वरूपनिरूपणसामर्थ्यसिद्धस्य पृथगुपादानवैयर्थ्यात्' । यथा वा 'एतस्य ( अनौचित्यस्य ) विवक्षितरसादिप्रतीतिविघ्नविधायित्वं नाम सामान्यलक्षणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षेमेन्द्रेण सर्वमिदमालोड्यैव रचिता औचित्यविचारचर्चा। यत्र औचित्यमेव काव्यात्मत्वेन स्वीकृतम्। यत् स्वरूपं चाग्रे दर्शयिष्यामः। सङ्क्षेपेण भरतोऽस्ति बीजवप्ता। आनन्दवर्धनेन परिवृंहितोऽयं विषयः, क्षेमेन्द्रेण च कृतप्राणप्रतिष्ठः।

( ख ) **प्रवर्तकः**—औचित्यस्य बीजं तु भरतादेव प्रचलितमिति समालोचकाः किन्तु काव्यात्मत्वेन तस्य प्रतिष्ठापकः क्षेमेन्द्रः। अयं काश्मीरदेशवासी आसीत्। १०२८ खिस्ताब्दतः १०६३ खिस्ताब्दं यावत् अनन्तस्य कलशस्य च शासनकालेऽयमासीदिति मदनमोहन झा महोदयस्य मतम्।[1]

( ग ) **औचित्यविमर्शः**—उचितस्य भावः औचित्यम्। परमेश्वर एव प्रतिष्ठापक औचित्यस्य। अवतारमाध्यमेन स दर्शयति स्वरूपमौचित्यस्य। दुर्दान्तस्य हिरण्यकशिपोर्नाशाय गृहीतस्तेन भीषणो नृसिंहरूपः। अमृतवितरणावसरे दानवछलनाय च मोहिनीरूपः। औचित्यात् स कदापि न भवति च्युतः, येन तन्नाम अस्ति अच्युतः। अत एव भागवतं गुणमौचित्यम्। जागतिकव्यवहारमूलं च। पितापुत्रयोः, गुरुशिष्ययोः पतिपत्न्योश्च व्यवहारनिर्णायकमौचित्यमेव। अत एव लोकः स्वीकृतः निकषोपल औचित्यस्य। पापपुण्यकल्पनाऽपि औचित्यानौचित्यजनिता एव। हेतुनानेन सौन्दर्यभावनाया आधारोऽपि औचित्यमेव। समाजे प्रत्येकवस्तुनः स्थानं सुनिश्चितम्। यतः स्खलनं भवति दोषाय अनौचित्याय। यथोक्तम्—

'स्थानभ्रष्टा न शोभन्ते दन्ता केशा नखा नराः'।

अनुचितस्थाने गृहीतं भूषणमपि भवति हास्याय। यथा—केयूरस्य कण्ठेऽङ्गदस्य पादे नूपुरस्य च बाहौ निवेशः। गुणा अपि भजन्ति दुर्गुणत्वम्। यथा—अहिंसा श्रेयस्करी। किन्तु आततायिनः अहिंसा न श्रेयस्करी। यथाऽऽहुः शास्त्राणि—

'आततायिनमायान्तं हन्यादेवाविचारयन्'।

सिद्ध्यत्यनेन साम्राज्यमौचित्यस्य। येन ललितकलास्वपि स्वीकृतमिदं तत्त्वम्। काव्यमपि कला एव। अतस्तत्रापि स्वीकृतमिदं तत्त्वम्। यथा—

'उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते'॥

---

१. औचित्यविचारचर्चा, पृ० ४९।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

औचित्यं च सप्तविंशतिः। पद-वाक्य-प्रबन्धार्थ-गुण-अलङ्कार-रस-क्रिया-कारक-लिङ्ग-वचन-विशेषण-उपसर्ग-निपात-काल-देश-कुल-व्रत-तत्त्व-सत्त्व-अभिप्राय-स्वभाव-सारसङ्ग्रह-प्रतिभा-अवस्था-विचार-नाम-आशीर्वादसंज्ञकानि तानि। किन्तूपलक्षणमिदम्। सम्भवन्ति अनन्तभेदाः। यथा च ग्रन्थकारः—अन्येषु काव्याङ्गेषु अनयैव दिशा स्वयमौचित्यमुत्प्रेक्षणीयम्। तदुदाहरणानि आनन्त्यान्न प्रदर्शितानि अलमतिप्रसङ्गेन। तत्त्वादीनि आशीर्वादान्तानि औचित्यानि क्षेमेन्द्रप्रतिभाविलासमात्राणि। शिष्टानि तु पूर्वाचार्यैः प्रदर्शितान्येव। किन्तु सर्वत्र नवीनदृष्टिप्रक्षेपः क्षेमेन्द्रस्याभिनवं योगदानम्। कथितं च तेन—

'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।'

( घ ) रसोपनिषद्विमर्शः—अस्य औचित्यस्य निर्वाह एव रसस्य मूलम्। प्रसिद्धं यदौचित्यं तस्य बन्धो योजनन्तु पुनः रसस्य परोत्कृष्टा उपनिषत् प्रकाशनोपाय इत्यर्थः। अत एव च भारते प्रबन्धप्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम्। तथात्वे तन्माहात्म्यप्रकर्षेणानौचित्यप्रत्ययाभावाद् रसभङ्गाभाव इत्याशयः। कविकल्पिते चेतिवृत्तेऽनौचित्यात् रसभङ्गजनकत्वं भविष्यत्येव। अतस्तत् समुपदिष्टः कविः ग्रन्थकृता। यथोक्तम्—

'प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा।'

( ङ ) अनौचित्यविमर्शः—सर्वमुपरिष्टाद् दर्शितमौचित्यम् एव कल्प्यते रसाय। अतस्तत्र कविना सावहितेन भाव्यम्। तद्व्यतिरिक्तं चानौचित्यम्। तदेव च रसभङ्गस्य कारणं यथाङ्गस्यातिविस्तारः अङ्गिनोऽननुसन्धानम् अनङ्गकीर्तनं प्रकृतिविपर्ययः। अत एव प्रबन्धौचित्यं समाश्रयणीयमेव अतथात्वेऽनौचित्यम्। तदेव च रसभङ्गस्य कारणम्। यथा च ध्वनिकारः—

'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।'

## ( १६ ) रसापकर्षका दोषाः वा दोषास्तस्यापकर्षकाः

( १९७९ )

अथवा

## रसदोषाः

लक्षणम्—रस-रसाभास-भाव-भावाभास-सन्धिशबलताद्यन्यतमरूपं काव्यस्यात्मानं सविलम्बितचमत्कारिवाक्यार्थं अपकर्षयन्ति साक्षात् परम्परया वा


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वप्रतीतिप्रतिबन्धद्वारा निकर्षयन्ति इति रसापकर्षका आस्वादविघ्नहेतवः काव्यवृत्तिधर्मविशेषा दोषाः। वा मुख्यार्थहतिदोषः।

भेदाः—इमे पञ्च प्रकाराः भवन्ति—१. पदे, २. पदांशे, ३. वाक्ये, ४. अर्थे ५. रसे च। यथोक्तम्—

'पदे पदांशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत्'।

(क) पददोषाः—इमे षोडशसङ्ख्यकाः—१. दुःश्रवता, २. व्रीडाश्लीलता, ३. जुगुप्साश्लीलता, ४. अमङ्गलाश्लीलता, ५. अनुचितार्थता, ६. अप्रयुक्तता, ७. ग्राम्यता, ८. अप्रतीतता, ९. सन्दिग्धता, १०. नेयार्थता, ११. निहतार्थता, १२. अवाचकत्वम्, १३. क्लिष्टत्वम्, १४. विरुद्धमतिकारिता, १५. अविमृष्ट-विधेयांशता १६. निरर्थकता च।

१. श्रुतिदुःखावहत्वं दुःश्रवत्वम्। यथा—

'कार्तार्थ्यं यातु तन्वङ्गी कदाऽनङ्गवशंवदा'।

२. व्रीडाव्यञ्जकशब्दत्वं व्रीडाश्लीलत्वम्। यथा—

'दृप्तारिविजये राजन्! साधनं सुमहत्तव'।

मेदिनीकोषानुसारं साधनं सैन्यं पुरुषलिङ्गं च। तदेव दूषकताबीजम्।

३. जुगुप्साव्यञ्जकशब्दत्वं जुगुप्साश्लीलत्वम्। यथा—

'प्रससार शनैर्वायुः'।

अपानवायुव्यञ्जकतया वायुशब्दः जुगुप्साजनकः।

४. अमङ्गलव्यञ्जकशब्दत्वम् अमङ्गलाश्लीलत्वम्। यथा—

'विनाशे तन्वि ते तदा'।

विनाशशब्दोऽत्र मृत्युव्यञ्जकतयाऽमङ्गलार्थकः।

५. अनुचितार्थप्रतिपादकत्वमनुचितार्थत्वम्। यथा—

'शूरा अमरतां यान्ति पशुभूता रणाध्वरे'।

अत्र कातर्यद्योतनाय पशुशब्दोऽनुचितः।

६. प्रसिद्धत्वेऽपि कविभिरनादृतत्वमप्रयुक्तत्वम्। यथा—

'भाति पद्मः सरोवरे'।

अमरकोषे पुंल्लिङ्गरूपेण लिखितस्यापि पद्मशब्दस्य कविभिरनादृतत्वात् दूषकता।

७. पामरलोकप्रसिद्धत्वं ग्राम्यत्वम्। यथा—

'कटिस्ते हरते मनः'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कटिशब्दोऽत्र ग्राम्यः ।

८. एकदेशमात्रप्रसिद्धत्वमप्रतीतत्वम् । यथा—

'योगेन दलिताशयः' ।

वासनार्थकः आशयशब्दः योगशास्त्रे एव प्रसिद्धः ।

९. सन्देहयुक्तत्वं सन्दिग्धत्वम् । यथा—

'आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु' ।

अत्र वन्दीभूतायां वन्दनीयामिति वा सन्देहः ।

१०. रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशकत्वं नेयार्थत्वम् । यथा—

'कमले चरणाघातं मुखं सुमुखि तेऽकरोत्' ।

अत्र चरणाघातेन निर्जितत्वं लक्ष्यम् ।

११. द्व्यर्थकस्याप्रसिद्धेऽर्थे प्रयोगत्वं निहतार्थत्वम् । यथा—

'यमुनाशम्बरमम्बरं व्यतानीत्' ।

दैत्यार्थकः शम्बरशब्दः जले निहतार्थकः ।

१२. विवक्षितार्थानुपस्थित्वमवाचकत्वम् । यथा—

'गीतेषु कर्णमादत्ते' ।

आङ्पूर्वको दाधातुरर्पणीयार्थविषयेऽवाचकः ।

१३. अर्थप्रतीतिर्व्यवहितत्वं क्लिष्टत्वम् । यथा—

'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः' ।

विलम्बेनार्थप्रतीतिरत्र दूषकताबीजम् ।

१४. प्रकृतार्थज्ञानावरोधकाप्रकृतार्थज्ञानजनकत्वं विरुद्धमतिकारित्वम् । यथा—

'भूतयेऽस्तु भवानीशः' ।

भवानीशशब्दोऽत्र भवान्याः पत्यन्तरप्रतीतिकृत् ।

१५. विधेयस्य विमर्शाभावेन गुणीभूतत्वमविमृष्टविधेयांशत्वम् । यथा—

'आसमुद्रक्षितीशानाम्' ।

विधेयस्य समुद्रस्य समासे गुणीभावात् दूषकता ।

१६. वृत्तिन्यूनतापरिहारमात्रप्रयोजनकत्वं निरर्थकत्वम् । यथा—

'मुञ्च मानं हि मानिनी' ।

अत्र हि शब्दः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१७. विवक्षितार्थसामर्थ्यरहितत्वम् असमर्थत्वम् । यथा—

'कुब्जं हन्ति कृशोदरी' ।

गत्यर्थकोऽपि हन्धातुरसमर्थः ।

१८. व्याकरणलक्षणानुगमरहितत्वं च्युतसंस्कारत्वम् । यथा—

'गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः' ।

'आङो यमहनः' स्वाङ्गकर्मकाच्चे'ति नियमात् 'आजघ्ने' इत्यत्र आत्मनेपदत्वं च्युतसंस्कारकत्वम् ।

अश्लीलत्वस्य पृथग्गणनादेवाष्टादशत्वम् । अतो षोडशत्वमव्याहतमेव।

( ख ) पदांशदोषाः—दुःश्रवता-अश्लीलता-निहतार्थता-अवाचकता-नेयार्थतादयो दोषा पदांशेऽपि भवन्ति ।

( ग ) वाक्यदोषाः—निरर्थकतामसमर्थतां च्युतसंस्कारतां विहाय शिष्टाः पददोषाः तन्नामानो वाक्यदोषाः भवन्ति । इत्थं पददोषसजातीया वाक्यदोषाः त्रयोदशसंख्यकाः । तद्विजातीयाश्च—

'वर्णानां प्रतिकूलत्वं लुप्ताऽऽहतविसर्गते ।
अधिकन्यूनकथितपदताहतवृत्तता ॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः ।
अर्धान्तरैकपदता समाप्तपुनरात्तता ॥
अभवन्मतसम्बन्धाक्रमामतपरार्थताः ।
वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा ॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः' ॥

( घ ) अर्थदोषाः—त्रयोविंशतिप्रकाराश्चार्थदोषाः भवन्ति । यथा—

'अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षता सहचरभिन्नताऽस्थानयुक्तता ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा ॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्तिताः' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१. 'विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये' ।
मुख्यानुपकारित्वमत्रापुष्टत्वम् ।
२. 'देहि मे वाजिनं राजन् ! गजेन्द्रं वा मदालसम्' ।
गजेन्द्रस्योत्तरत्वमत्र दुष्क्रमत्वम् ।
३. 'स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिये' ।
ग्राम्यत्वमत्र ।

४. 'हरन्ति हृदयं यूनां न नवेन्दुकलादयः ।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥'

पूर्वापरव्याहन्यमानत्वादत्र व्याहतत्वम् ।

५. 'हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः ॥'

प्रतीयमानार्थोऽत्राश्लीलः सुरताभिव्यञ्जकत्वात् ।

६. 'वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः ।
+ + +
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः ॥'

दुर्बोधार्थत्वं कष्टार्थत्वम् ।

७. 'सदा चरति खे भानुः सदा वहति मारुतः ।'
अत्र सदेत्यनवीकृतत्वम् ।

८. 'गृहीतं येनासीः परिभवभयान्नोचितमपि ।
+ + +
विमोक्ष्ये शस्त्रं त्वामहमपि यतः स्वस्ति भवते ॥'

द्वितीयशस्त्रत्यागे हेतोरनुक्तत्वात् निर्हेतुत्वम् ।

९. 'कुमारस्ते नराधीशः श्रियं समधिगच्छतु ।'
'त्वं म्रियस्व' इति विरुद्धार्थप्रकाशनात् प्रकाशितविरुद्धत्वमत्र ।
१०. 'अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ।'
अत्र वक्ता शान्तः शृङ्गारी वेति सन्देहः ।

११. 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥'

द्वितीयार्धेऽत्र द्वितीयपादार्थदानात् पुनरुक्तता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१२. 'ततश्चचार समरे शितशूलधरो हरिः ।'
महादेवस्यैव शूलं लोके प्रसिद्धमिति प्रसिद्धिविरुद्धता ।
१३. 'अधरे करजक्षतं मृगाक्ष्याः ।'
कामशास्त्रविरुद्धत्वादत्र विद्याविरुद्धता ।
१४. 'ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नं च कथं नाम मृष्यते भार्गवोऽधुना ॥'
स्त्रीरत्नमुपेक्षितुमिति साकाङ्क्षता ।
१५. 'सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी ।
खलः पूज्यः समज्यायां तापाय मम चेतसः ॥'
अत्र खलोऽशोभन इति सहचरभिन्नत्वम् ।
१६. 'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिभूर्तपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥'
इत्यनुपयुक्तस्थाने समापितवाक्यार्थत्वमस्थानयुक्तत्वम् ।
१७. 'हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ।'
सामान्ये वक्तव्ये विशेषकथनम् ।
१८. 'आवर्त एव नाभिस्ते ।'
अत्रावर्त एवेति नियमो न वाच्यः ।
१९. यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ।'
इति विशेषे वक्तव्येऽविशेषस्योदाहरणम् ।
२०. 'आपातसुरसे भोगे निमग्नाः किं न कुर्वते ।'
इति नियमे वक्तव्येऽनियमस्योदाहरणम् ।
२१. 'आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति ।'
विवाक्षितार्थस्यानिर्वाहे एव विध्ययुक्तताऽत्र ।
२२. 'चण्डीशचूडाभरण चन्द्र लोकतमोपह ।
विरहिप्राणहरणं कदर्थय न मां वृथा ॥'
इति अनुवादायुक्तता ।
२३. 'लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगात् गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥'

इति निर्मुक्तपुनरुक्तत्वे ।

( ङ ) रसदोषाः—'रसदोषाश्च भवन्त्यधोलिखिताः—

रसस्योक्तिः स्वशब्देन स्थायीसञ्चारिणोरपि ।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ॥
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्तनम् ।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्ययः ॥
अर्थानौचित्यमन्यच्च दोषा रसगता मताः ।'

१. 'चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम् ।'

इत्यत्र रसस्य स्वशब्दवाच्यत्वम् ।

२. 'अजायत रतिस्तस्यास्त्वयि लोचनगोचरे ।'

स्थायिभावस्य स्वशब्दवाच्यत्वम् ।

३. 'जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने ।'

व्यभिचारिणः स्वशब्दवाच्यत्वम् ।

४. 'मानं मा कुरु तन्वङ्गि ज्ञात्वा यौवनमस्थिरम् ।'

शृङ्गारपरिपन्थिनः शान्तरसस्याङ्गं शान्तस्यैव च विभावः । इति परिपन्थिरसाङ्गविभावपरिग्रहः ।

५. 'धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी ॥'

अत्र रसस्य उद्दीपनालम्बनविभावावनुभावपर्यवसायिनौ स्थिताविति कष्टकल्पना ।

६. 'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥'

कामिनीरूपविभावस्य कृच्छ्रादाक्षेपः ।

७. वेण्यां द्वितीयाङ्के दुर्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् अकाण्डे प्रथनम् ।

८. वीरचरिते 'कङ्कणमोचनाय गच्छामि' इति राघवोक्तौ अकाण्डे च्छेदः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

९. कुमारसम्भवे रतिविलापे पुनः पुनर्दीप्तिः ।

१०. रत्नावलीचतुर्थाङ्के सागरिकाविस्मृतौ अङ्गिनोऽननुसन्धानम् ।

११. कर्पूरमञ्जर्यां नृपनायिकयोः वन्दिवर्णितप्रशंसनेऽनङ्गस्य कीर्तनम् ।

१२. किराते सुराङ्गनाविलासादौ अङ्गस्यातिविस्तृतिः ।

१३. प्रकृतीनां विपर्ययः । प्रकृतयस्त्रिधा—दिव्या अदिव्या दिव्यादिव्याश्च । यो यथाभूतस्तस्यायथावर्णने प्रकृतिविपर्ययो दोषः । यथा—धीरोदात्तस्य रामस्य धीरोद्धतवच्छद्मना बालिवधः ।

१४. देशकालादीनामन्यथावर्णनेऽपि भवत्यनौचित्यम् ।

विशेषः—भोजराजादिभिः स्वीकृतानामलङ्कारदोषाणामपि भवति पूर्वोक्तेष्वेवान्तर्भावः ।

( च ) दोषाणां गुणत्वम्—अधोलिखितदशायां दोषा अपि भजन्ति गुणत्वम् ।

'वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।<br>
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥<br>
सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ।<br>
स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ॥<br>
गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ।<br>
स्वयं वाऽपि परामर्शे कथितं च पदं पुनः ॥<br>
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।<br>
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ॥<br>
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ।<br>
सन्दिग्धत्वं तथा व्याजस्तुतिपर्यवसायि चेत् ॥<br>
वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि ।<br>
कष्टत्वं दुःश्रवत्वं वा ग्राम्यत्वमधमोक्तिषु ॥<br>
निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ।<br>
कवीनां समये ख्याते गुणः ख्यातविरुद्धता ॥<br>
धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ।<br>
आरूढत्वादिबोधाय प्रयोक्तव्याः स्थिता अमी ॥<br>
उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।<br>
क्वचिन्न दोषो न गुणः गुणः क्वाऽप्यधिकं पदम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समासपुनरात्तत्वं न दोषो न गुणः क्वचित् ।
गर्भितत्वं गुणः क्वापि पतत्प्रकर्षता तथा ॥
क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः ।
अनुभावविभावाभ्यां रचना यत्र नोचिता ॥
सञ्चार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ।
विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ॥
भवेद्विरोधो नान्योऽन्यमङ्गिन्यङ्गत्वमाप्तयोः ।
अनुकारे च सर्वेषां दोषाणां नैव दोषता' ॥

## ( १७ ) गुणालङ्कारभेदनिरूपणम्

अथवा

## सौन्दर्यनिस्यन्दा एव गुणालङ्काररीतयः

अथवा  ( १९८६ )

## उत्कर्षहेतवः प्रोक्ताः गुणालङ्काररीतयः

**गुणाः**—के गुणा ? इति जिज्ञासायामुच्यते—

'ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' ॥

यथा जीवात्मनः शौर्यादयो धर्माः लोके प्रसिद्धाः तथैव प्रधानस्य रसस्य ये धर्माः रसोत्कर्षहेतवः ये च रसं विना नावतिष्ठन्ते ते एव गुणशब्दवाच्याः । यथा च शरीरस्य शौर्यादयो धर्मा न तथैव वर्णानां धर्मा न गुणाः । ननु मधुरा वर्णा इति लोकव्यवहारात् वामनादिभिश्च समर्थितत्वात् गुणस्य वर्णधर्मत्वमस्ति इति चेत् ? न । गुणाः वर्णैर्व्यञ्जिता भवन्ति । न च ते वर्णमात्राश्रयाः । इमे रजस्तमःसत्त्वातिरिक्तस्वरूपाः काव्यात्मभूतरसनिष्ठाः धर्मविशेषाः । यथाऽऽह विश्वनाथः—

'रसस्याङ्गित्वमाप्तस्य धर्मा शौर्यादयो यथा । गुणाः ।'

'यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वाच्छौर्यादयो गुणशब्दवाच्याः तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषाः माधुर्यादयोऽपि स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपयिकानुगुण्यभाज इत्यर्थः । एषां रस-मात्रस्य धर्मत्वम् ।' अत एव 'गुणालङ्कारयोः कोऽपि भेदो नास्ति काव्योत्कर्षस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समानैकत्वाद् वा यथा काव्यशोभाधायका अलङ्कारास्तथैव गुणा अपीति' कथनं सूक्ष्मेक्षिकप्रतिभाविलासहीनमेव ।

**अलङ्काराः**—अलङ्कारान् परिभाषयति आचार्यप्रवरो मम्मटः—

'उपकुर्वन्ति ते सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः' ॥

यथा हारादयः कण्ठादीनामात्मनश्चोपकारकाः भवन्ति तथैव शब्दार्थद्वारेण ये कदाचिदेव सम्भाविनं रसमुपकुर्वन्ति न च सर्वदा तेऽनुप्रासादय अलङ्काराः । विश्वनाथोऽपि समर्थयति तथ्यमिदम्—

'शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्' ॥

'यथाऽङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति तथाऽनुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारकाः । अलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः ।' रसादि धर्मस्वरूपाणां रसवदाद्यलङ्काराणामपि वक्ष्यमाणत्वेन शब्दार्थयोरित्युपलक्षणम् । अस्थिराः काव्येष्वनियतवृत्तयः । परम्परया शब्दार्थधर्माणां गुणानां च वारणम् । धर्मा अनुप्रासोपमादयो न तु गुणास्तेषामस्थिरत्वाभावात् । शोभां काव्यस्य सौन्दर्यम् अतिशाययन्ति अतिशयेन जनयन्ति इति शोभातिशायिनः काव्यसौन्दर्यातिशयप्रयोजका इत्यर्थः । तेन वाच्यत्वप्रमेयत्वादीनाम् अतद्रूपाणां नालङ्कारत्वम्, रीतेः शब्दशोभाजनकत्वेऽपि गुणालङ्कारवच्छोभातिशयजनकत्वं नास्तीति न तत्रातिव्याप्तिः इति कृष्णमोहनशास्त्री ।

**भेदनिरूपणम्**—गुणेभ्य अलङ्काराः अलङ्कारेभ्यश्च गुणा भिन्नाः । ननु समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः । ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैषां भेद इति न वाच्यम् । उभौ परस्परं भिन्नौ । प्राचां कथनमसङ्गतं नास्ति । रसाधर्मत्वचलास्थित्वरूप एव अस्ति अत्र भेदकः ।

यत्तु वामनेनोक्तम्—'काव्यशोभायाः कर्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलङ्काराः इति तदपि न युक्तम् । यतः किं समस्तैः गुणैः काव्यव्यवहारो वा कतिपयैः ? यदि समस्तैः तत् कथमसमस्तगुणा गौणी पाञ्चाली च रीतिः काव्यस्यात्मा ?' अथ कतिपयैस्ततः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अद्रावत्र प्रज्वलत्यग्निरुच्चैः ।
प्राज्यः प्रोद्यन्नुल्लासत्येष धूमः ॥'

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः । वामनोक्तं काव्यलक्षणमपि नोचितम् । किन्तु—

'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥'

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ । अत एव मम्मटप्रदर्शितोऽस्ति भेदः गुणालङ्कारयोः ।

रीतयः—उक्तं च वामनेन 'रीतिरात्मा काव्यस्य' । पदानां विशिष्टा रचना एव रीतिः । यथोक्तम्—'विशिष्टा पदरचना रीतिः' । पदानां वैशिष्ट्यं गुणादेव । हेतुनानेन गुणावलम्बिता रीतिः । कथ्यते च रीतिसम्प्रदायो गुणसम्प्रदायनाम्नाऽपि । दशशब्दगुणानां दशार्थगुणानां च समसंज्ञकानां कल्पना कृता वामनेन । किन्तु सर्वमिदं खण्डितं परवर्तिभिः ।

गुणालङ्काररीतिभेदनिरूपणम्—रसधर्मत्वे सति रसोत्कर्षकत्वं गुणत्वम् । गुणा अचलस्थितिरूपाः । ते च रसे समवायवृत्त्या वर्तन्ते । अलङ्कारास्तु न नियताः । अत एवोक्तम् अस्थिरा इति । अर्थादलङ्काराः कादाचित्काः । रीतीनां तु शब्दशोभाजनकत्वमेव, न तु शोभातिशयजनकत्वमिति गुणालङ्काररीत्योः व्यवस्थिता ।

## ( १८ ) गुणीभूतव्यङ्ग्यम्

### ( १९८६ )

यत्र व्यङ्ग्योऽर्थो भवति वाच्यार्थापेक्षयाल्पचमत्कारी तुल्यचमत्कारी वा तत्र गुणीभूतव्यङ्ग्यमिति समालोचकानां काव्यशास्त्रिणां मतम् । तस्याष्टौ प्रकाराः भवन्ति—१. अगूढम्, २. अपरस्याङ्गम्, ३. वाच्यसिद्ध्यङ्गम्, ४. अस्फुटम्, ५. सन्दिग्धप्राधान्यम्, ६. तुल्यप्राधान्यम्, ७. काक्वाक्षिप्तम्, ८. असुन्दरं च इति ।

१. अगूढम्—असहृदयैरपि यत् शीघ्रसंवेद्यं भवति तदगूढम् । यथा—

( क ) 'यस्यासुहृत्कृततिरस्कृतिरेत्यतप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न सम्प्रति भवामि किमावहामि' ॥

अत्र जीवन्निति पदं प्रकृष्टजीवनं लक्षयति । नञा च तदभावस्य बोधेऽनुतापादेव जीवनं निन्दति इति अनुतापातिशयोऽत्र व्यङ्ग्यः । स च सामान्यजनसंवेद्यत्वादगूढः । श्लाघ्यजीवितस्यैव लक्ष्यत्वे तु अर्थान्तरसङ्क्रमणम् ।

( ख ) अत्यन्ततिरस्कृतवाच्यमगूढं यथा—

'उन्निद्रकोकनदरेणुपिशाङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम्' ॥

मुख्योऽर्थोऽत्र चुम्बते इति । स च अचेतने रविबिम्बे बाधित इति संयोगमात्रं लक्षयतोऽस्यास्ति अत्यन्ततिरस्कृतवाच्यता । उषःकालारम्भश्च व्यङ्ग्यः । स च वाच्यमानतया अगूढ इति गुणीभूतता ।

( ग ) अर्थशक्तिमूलव्यङ्ग्यमगूढं दर्शयति—

'अत्रासीत् फणिपासबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥

केनाप्यत्र इति अर्थशक्तिमूलं संलक्ष्यक्रमं रामरूपमगूढं व्यङ्ग्यम् ।

( २ ) अपरस्याङ्गम्—रसस्य भावस्य रसाभासस्य भावशान्त्यादेरङ्गतायाम् । यथा—

( क ) रसस्य रसाङ्गतायाम्—

'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः' ॥

नायिकाविषयो नायकाश्रयोऽत्र शृङ्गाररसः । स च स्मर्यमाणः सन् नायिकाश्रयस्य करुणस्याङ्गभूतः । रसवदलङ्कारश्चात्र रसस्याङ्गतया ।

( ख ) रसस्य भावाङ्गतामुदाहरति—

'कैलासाचलभाललोचनरुचा निर्वर्तितालक्तकः
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा भावताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्पर्धाबन्धसमृद्धमेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारिसरसा सद्यः समुत्सार्यते' ॥

कविनिष्ठभवानीविषयकरत्याख्यभावस्य शिवनिष्ठपार्वतीविषयकसम्भोगरूपः शृङ्गारोऽङ्गमत्र ।

( ग ) भावस्य भावाङ्गतामुदाहरति—

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयः
तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतमिति प्रस्तौमि यावद् भुवः
तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'

भूमिविषयककविनिष्ठभावोऽत्र नृपविषयककविनिष्ठरतिभावस्याङ्गम् ।

( घ ) रसाभासभावाभासयोर्भावाङ्गतामुदाहरति—

'वन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसीः
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः
अस्माकं सुकृतैर्दृशोर्निपतितोस्यौचित्यवारां निधेः
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे' ।

सैनिकनिष्ठः शृङ्गारः प्रत्यर्थिनिष्ठो रतिभावश्च अनौचित्यप्रवृत्तत्वादाभासरूपौ । तौ च राजविषयककविनिष्ठरत्याख्यभावस्याङ्गभूतौ । ऊर्जस्विनामालङ्कृतिः ।

( ङ ) भावशान्तिः भावाङ्गता । यथा—

'अविरलकरवालकम्पनैर्भृकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणेक्षणात् ॥'

कविनिष्ठनृपविषयकरत्याख्यभावस्य भावप्रशमः मदरूपभावस्याङ्गम् ।

( च ) भावोदयस्य भावाङ्गता । यथा—

'साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम्' ॥

भासरूपभावोदयोऽत्र कविनिष्ठनृपविषयकरतिभावस्याङ्गम् । समाहिताख्यालङ्कृतिः ।

( छ ) भावसन्धेः भावाङ्गता । यथा—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वा दिश्यात् कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः' ।

शिवगतयोः आवेगधैर्यारम्भयोः सन्धिः कविनिष्ठभवविषयकरतिभावस्याङ्गम् ।

( ज ) भावशबलतायाः भावाङ्गता । यथा—

'पश्येत् कश्चिच्चल चपल ! रे ! का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते' ।

अत्र शङ्काऽसूयात्वराधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यादीनां भावानां शबलता राजविषयकरतिभावस्याङ्गम् ।

( झ ) शब्दशक्तिमूलानुरणनरूपोपमालङ्कारस्य वाच्याङ्गता । यथा—

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता' ॥

प्रकृताप्रकृतयोः कवयितृरामयोरुपमा मयाप्तं रामत्वमिति वाच्याया उपमाया वाच्याङ्गत्वम् । शब्दपरिवृत्त्यसहत्वाच्च शब्दशक्तिमूलता ।

( ञ ) अर्थशक्तिमूलानुरणनरूपस्य लक्ष्यक्रमस्य वस्तुनो वाच्याङ्गता । यथा—

'आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिकीं क्वचिदपि क्षपितत्रियामः ।
एनां प्रसादयति पश्य जनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः' ॥

२. वाच्यसिद्ध्यङ्गम्—

'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणञ्च जलदभुजगं प्रसह्य कुरुते विषं वियोगिनीनाम्' ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हलाहलमत्र व्यङ्ग्यं भुजङ्गरूपस्य वाच्यस्य सिद्धिकृदिति वाच्यसिद्ध्यङ्गता।

४. अस्फुटव्यङ्गता—

'अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्'॥

अत्रादृष्टता वियोगानुत्पत्तिश्च व्यङ्ग्ये। ते च व्युत्पन्नानामपि विलम्बवेद्यत्वादस्फुटे।

५. सन्दिग्धप्राधान्यता। यथा—

'हरस्तु किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि'॥

अत्र परिचुम्बनविलोचनव्यापारयोः कस्य प्राधान्यमिति सन्देहः।

७. तुल्यप्राधान्यव्यङ्गता। यथा—

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते'॥

जामदग्न्योऽत्र सर्वेषां क्षत्रियाणामिव रक्षसामपि क्षणेन नाशको भविष्यतीति व्यङ्ग्यस्य वाच्यस्य च प्रधानता समाना।

७. काक्वाक्षिप्तता। यथा—

मथ्नामि कौरवशतं समरे न कोपात्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया च सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन'॥

८. असुन्दरम्। यथा—

'वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानि'॥

अत्र व्यङ्ग्यमसुन्दरं वाच्यापेक्षया। इत्थं गुणीभूतव्यङ्ग्यं सभेदं प्रदर्शितम्। वाच्यादर्थादनुत्तमे व्यङ्ग्यार्थे सति गुणीभूतव्यङ्ग्यं नाम काव्यं भवति। यथा च ध्वनिकारः—

'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत्'॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वनाथश्च—

'अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये।'

## ( १९ ) शान्तोऽपि नवमो रसः

अथवा (१९७९)

## शान्तरसविषयकविवादाः

अथवा (१९८३)

## रसः स शान्तः कथितो मुनीन्द्रैः

शान्तं निरूपयन् लिखति तत्रभवान् महापात्रो विश्वनाथः साहित्यदर्पणस्य तृतीयपरिच्छेदे—

'शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः॥
अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते॥
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः॥
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः।
निर्वेदहर्षस्मरणमतिभूतदयादयः॥'

अस्य स्थायिभावोऽस्ति शमः। प्रकृतिरुत्तमा। कुन्देन्दुवदतिधवलो वर्णः। श्रिया युक्तो नारायणोऽस्य देवता। समस्तवस्तूनां वित्तपुत्रादिपदार्थानां निःसारता परमात्मस्वरूपं वाऽऽलम्बनम्। पुण्याश्रमः चित्रकूटादि हरिक्षेत्रं श्रीक्षेत्रं तीर्थं प्रयागादि रम्यवनं नैमिषारण्यादि वैद्यनाथादयः महापुरुषसङ्गः मोक्षशास्त्रश्रवणमननादयश्चोद्दीपनविभावाः। रोमाञ्चः दया संन्यस्ततादयोऽनुभावाः। निर्वेदः, हर्षः, स्मरणं, मतिः, धृतिः, औत्सुक्यादयश्च व्यभिचारिणोऽत्र भवन्ति। यथा—

'रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति'॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र वक्तुर्भिक्षोः शमः स्थायिभावः परमात्मस्वरूपमालम्बनविभावः आक्षेप-लभ्यः पुण्याश्रमदर्शनादिरुद्दीपनविभावः, एतादृगुक्तिरनुभावः हर्षादयश्च व्य-भिचारिणः, एषसमुदायः सभ्येषु शान्तरसतया परिणमते इति हरिदाससिद्धान्त-वागीशाः ।

मम्मटमते त्वस्य स्थायिभावोऽस्ति निर्वेदः । यथोक्तम्—

'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः' ।

उदाहरति च—

'अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित् पुण्यारण्ये शिव शिव शिवेति प्रलपतः' ॥

अत्रालीकत्वेन ज्ञायमानं जगदालम्बनम् । तपोवनादिश्चोद्दीपनम् । सर्वत्र समदर्शनमनुभावः । मत्यादयो व्यभिचारिणः । निर्वेदः स्थायी । एतेन शान्त-रसनिष्पत्तिः । विषयेषु तत्त्वज्ञानादुत्पन्ना हेयत्वधीरेव निर्वेदः । अन्तःकरण-वृत्तिरूपाणाममीषां निर्वेदादिभावानामाशुविनाशित्वं नाशङ्कनीयम् । संस्कारा-त्मनाऽऽप्रबन्धं स्थिररूपत्वात् रसप्रतीतिकालं यावदनुसन्धीयमानत्वाच्च स्थायित्वं स्वीकृतममीषाम् ।

आक्षेपः—केषाञ्चिन्मते नास्ति रसत्वं शान्तस्य । यतो हि—

१. प्रस्थानविरुद्धोऽयम् । साहित्यसंसारे भरत एवाऽस्ति प्रथमः आचार्यः रसनिरूपणरतः । तेन शान्तस्य वर्णनं न कृतम् । तेनाप्रतिपादितत्वात् नास्ति शान्तस्य रसता ।

२. व्यावहारिकताभावोऽत्र दूषकताबीजम् । जगति शमस्य सत्ता नास्ति व्यावहारिकी । रागद्वेषयोर्विनाशः नितरामसम्भवः । अनादिकालाच्च प्रवहति मानवेष्वयम् । अतस्तस्योदयस्य सम्भावनैव नास्ति ।

३. शमस्य स्थायित्वमेव नास्ति । अतं एव नास्ति शान्तस्य रसता । शम-प्रधाने चेतसि परमतत्त्वाधिगमाय या प्रयत्नपरम्परा विलसति तदपि उत्साह एव । अतस्तद्वीरेऽन्तर्भवति । सांसारिकेषु विषयेषु सततमनुभूयमाना जुगुप्सा च बीभत्से । अत एव न स्वीकरणीयो रसः शान्तो नाम ।

४. नाटके शान्तस्याभावः । श्रव्यकाव्ये तदस्ति इति केचित् । नाटकस्य व्यापारप्राधान्यत्वात् शमस्य च व्यापाराभावरूपत्वात् नास्ति शान्तो नाम


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रसो नाटके। वैराग्ययुक्तस्य शान्तस्यास्वादने लौकिका जना सक्षमा न भविष्यन्ति। अनिर्वचनीयत्वात् नाटके शान्तस्य प्रयोगोऽसम्भवः, इति दशरूपककारः। काव्ये तस्य स्थितिर्भवति।

५. अभिनवगुप्ताचार्यपादास्तु शान्तस्यैव प्राधान्यं स्वीकुर्वन्ति। काव्ये नाटके चास्यावश्यभाव्यतां प्रतिपादयन्ति। शान्तस्य स्थायिभावविषयेऽस्ति मतवैभिन्यं न च सत्तायां प्रामाणिकतायां वा। अयमेव प्रकृतः शेषास्तु विकृतिरूपाः।

आचार्यविश्वनाथस्तु खण्डयन् आक्षेपान् लिखति साहित्यदर्पणे—

'निरहङ्काररूपत्वाद् दयावीरादिरेष नो'।

नन्वत्रापि प्राणिदयायां धर्मादौ चोत्साहस्य विद्यमानत्वात् तादृशोत्साहस्यैव स्थायिभावाभ्युपगमत्वेनायमपि दयावीरादावेवान्तर्भवति इति अलमतिरिक्तशान्तरसकल्पनयेति न वाच्यम्—शान्तस्य दयावीरादेः सकाशाद् भेदोऽस्ति। दयावीरादौ हि नागानन्दादौ जीमूतवाहनादेरन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्तित्वाद्याप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्वाकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। ततश्च नागानन्दादेः शान्तरसप्रधानत्वमपास्तम्। ननु—

'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।
रसः स शान्तः कथितो मुनिन्द्रैः सर्वेषु भावेषु समप्रमाणः'॥

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात्तत्र सञ्चार्यादीनामभावात् कथं रसत्वमित्युच्यते—

'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः।
रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिश्च न विरुद्धा'॥

यश्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिक-सुखपरत्वान्न विरोधः। उक्तं हि—

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥
सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तथा'॥

आदिशब्दात् धर्मवीर-दानवीर-देवताविषयकरतिप्रभृतयः। कृष्णमोहनशास्त्रिणस्तु कथयन्ति—अहङ्कारसंवलितो दयादिरेव दयावीरादेः प्रयोजकः, निरहङ्कारत्वे तु शान्तरस इति वैचित्र्यविशेषाद् भेदाभ्युपगमः। विषयेभ्यः परा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृत्य साक्षात् कर्तव्ये ब्रह्मणि निधाय वर्तमानश्चिन्तासन्तानवान् युक्तः । यस्य च योगजधर्मसहकृतेन मनसा जिज्ञासितवस्तुसाक्षात्कारो जायते, यश्च भूतेन्द्रियजयीरणिमाद्याः कार्यसिद्धीर्दूरश्रवणाद्याश्चेन्द्रियसिद्धीरासादितवान् स समाधिव्युत्थितो वियुक्तः । यस्य योगजधर्मसहकृतानि बहिरिन्द्रियाणि स्वे स्वे विषये महत्त्वसन्निकर्षादिसहकारनिरपेक्षाणि वर्तन्ते । तद्दशायां पुरुषस्य यः शमः अवस्थितो वर्तते स एव स्थायिभावो यतो रसतामेति तत् तस्मादस्मिन् शान्तरसे सञ्चार्यादिः आदिपदादालम्बनोद्दीपनानुभावानाञ्चापि स्थितिश्च न विरुद्धा प्रतिकूला पुरुषस्य तस्मिन् कालेऽपि संसारासक्तिमत्वेन निर्वेदादीनामपि भवितुं शक्यत्वात् ।

ननु पूर्वं 'शमो निरीहावस्थायामि'ति सुखरूपत्वं न यत्र दुःखमित्यादिना च सुखाभावरूपत्वं च प्रतिपादितम् । अत एव पूर्वापरयोर्विरोध आपद्यत इति चेत् ? न । 'न यत्र दुःखमि'त्यादौ वैषयिकसुखपरत्वात् सुखशब्दस्य । तेन शान्तस्य वैषयिकसुखभिन्नं तृष्णाक्षयाधीनं सुखं विद्यत एव । अथ च 'न यत्र दुःखमि'त्यादौ कामिनीसम्भोगादिजनितसुखाभाव उक्तः न च ब्रह्मसुखाभावः । अङ्गनाऽऽलिङ्गनादिवैषयिकसुखं यागादिकर्मणा लभ्यं परलोकीयं महासुखम् । एते द्विविधे सुखे तृष्णाक्षयसुखस्य शमनिबन्धनब्रह्मानन्दस्य षोडशीं कलामपि न प्राप्नुतः ।

दयावीरादौ शान्तरसस्यान्तर्भावस्तु न भवत्येव । प्रत्युत दयावीरादिपात्राणामहङ्कारसामान्याभावे दयावीरादिरसा एव शान्तरसे अन्तर्भावं प्राप्नुवन्ति । अतः शान्तो नामातिरिक्तो रसः स्वीकर्तव्य एव । परश्शता आनन्दश्रुतय एव प्रमाणमत्र । शान्तरसस्यान्तर्भूतदेवतादिविषयकरतिमुदाहृत्य दर्शयति साहित्यदर्पणकारः—

'कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन् निमिषमिव नेष्यामि दिवसान्' ॥

कौपीनादिविशेषणैः सुखादिराहित्यप्राप्तया सर्वाहङ्काराराहित्यलाभात् देवविषयकरतेरपि शान्तरसत्वप्राप्तिः । एतेन च सञ्चार्यादिभिरपुष्टतया न शान्तो रसः किन्तु शिवविषयकं रतिमात्रं भावशब्दवाच्यम् इति कथनमप्यपास्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ( २० ) शब्दशक्तिमूलध्वनिः

अथवा ( १९८६ )

# वस्तुध्वनिः

अथवा ( १९८६ )

# संलक्ष्यक्रमव्यङ्ग्यः

१. संलक्ष्यक्रमव्यङ्ग्यः—घण्टावादनसमये प्रधानशब्दश्रवणोत्तरं यथा क्षोदीयानपरस्तत्सदृशो जायते प्रतिशब्दः तथा यत्र शब्दप्रतीत्यनन्तरमेव भवति व्यङ्ग्यार्थप्रतीतिः सः शब्दशक्तिमूलो ध्वनिः यत्रार्थप्रतीत्यनन्तरं भवति व्यङ्ग्यार्थप्रतीतिः स अर्थशक्तिमूलो ध्वनिः यत्र च शब्दार्थोभयप्रतीत्युत्तरमेव भवति व्यङ्ग्यार्थप्रतीतिः स शब्दार्थोभयशक्तिमूलः। शब्दपरिवर्तनासहत्वेन शब्दशक्तिमूलकता शब्दपरिवर्तनसहत्वेन अर्थशक्तिमूलकता। अवच्छेदकभेदेन तदसहत्वासहत्वाभ्यां तूभयशक्तिमूलकता। यथा मम्मटः—

'अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः'॥

विश्वनाथश्च—

'शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे।
ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः'॥

तत्राद्यः शब्दशक्तिमूलानुरणनरूप व्यङ्ग्यो भवति द्विविधः—( क ) अलङ्कारध्वनिरूपः, ( ख ) वस्तुध्वनिरूपश्च। यथा—

'अलङ्कारोऽथ वस्त्वेव शब्दात् यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा'॥

समर्थयति विश्वनाथोऽपि मम्मटस्येमामुक्तिम्—

'वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा'।

( क ) अलङ्कारध्वनिः—अलङ्कारध्वनिमुदाहरति मम्मटः—

'उल्लास्य कालकरवालमहाम्बुवाहम्
देवेन येन जठरोर्जितगर्जितेन।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः'॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिधायाः नियन्त्रणात् प्रथमेऽर्थेऽत्र वस्तुरूपो हि द्वितीयोऽर्थः तथा बोधयितुमशक्यः। अत एव व्यङ्ग्य एव। अर्थालङ्कारोऽपि व्यङ्ग्य एव तयोस्ततः। तेन चोपमालङ्कारध्वनित्वम्। यथा च—

'तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो ! मधुरलीलः।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणी विभाति भवान्'॥

ध्वनिरत्र विरोधाभासालङ्कारस्य। न केवलं सभङ्गे पदे एव विरोधाभासालङ्कारध्वनिर्भवति अपि तु अभङ्गेऽपि। यथा—

'अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो।
अहितः सहितः साधुयशोभिरसतामसि॥'

विरोधव्यञ्जकस्य भावे वाच्यता ज्ञेया। तदभावे च व्यङ्ग्यत्वम्। व्यतिरेकस्य ध्वनित्वं यथा—

'निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने'॥

चित्रकलाशब्दोत्थया व्यञ्जनया आलेख्यचतुरता बोध्यते। किन्तु तूलिकाद्युपादानाभावेन भित्तौ रचनाकारकेभ्यः कलाकारेभ्यः शूलिन उत्कर्षः प्रतीयते।

अलङ्कार्याणामलङ्कारत्वं कथमिति नाशङ्कनीयम्। तस्य ब्राह्मणश्रमणन्यायेनालङ्कारता भवति इति सिद्धान्तः।

(ख) वस्तुध्वनिः—शब्दशक्तिमूलस्य वस्तुध्वनेरुदाहरणं यथा—

'पथिक नाऽत्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस'॥

उपभोगक्षमोऽसि चेदास्व इति वस्तु व्यञ्जनयाऽत्र बोध्यते। तत्रैव वाच्यस्याभिप्रायत्वात्। पयोधरादिशब्दानां परिवर्तनासहत्वात् शब्दशक्तिमूलत्वम्। अन्यदपि यथा—

'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।
यत्र प्रसीदति पुनः स भात्युदारोऽनुदारश्च' ॥

नत्रो विरोध्यर्थकत्वेनात्राशनिपदात् शनिविरोधरूपार्थबोधे विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः वस्तुध्वनिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ( २१ ) श्लेषालङ्कारनिरूपणम्

अथवा

## श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्

परिभाषा—अनेकेनार्थेन मिलितैः वाच्यतासम्बन्धेन च श्लिष्टैः एकेनैवोच्चारणेन युगपदनेकार्थबोधकैः सुप्तिङन्तैः पदैरभिधयाऽनेकार्थाभिधाने श्लेषालङ्कारो भवतीति विश्वनाथः—

'श्लिष्टैः पदैरनेकार्थाऽभिधाने श्लेष इष्यते ।'

पदैरिति बहुवचनमतन्त्रम् । एकस्मिन्नपि पदेऽनेकार्थसंश्लेषे श्लेषो भवति। एकोच्चारणेनैव युगपदनेकार्थवाचकत्वं श्लेषत्वमिति व्यवस्थापयन् मतान्तरं च खण्डयन् कथयति कृष्णमोहनशास्त्री साहित्यदर्पणटीकायाम्—

'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' नियमाङ्गीकर्तृणां रामचरणमहोदयानां मतेन एकानुपूर्वीकत्वेऽपि तत्तदर्थनिरूपितवृत्तिभेदाच्छब्दभेद इत्यर्थकेन अर्थभेदेन शब्दभेद इति नयेन भिन्नाः शब्दाः इन्द्रशत्रुप्रभृतीनां भिन्नसमासानां श्लेषे उदात्तानुदात्तादिस्वरभेदे भेदग्रहो दुरपह्नव इति शङ्कानिवारणाय 'काव्यमार्गे स्वरो न गण्यते' इति नयस्तेन च युगपदुच्चारणविषयतया यत् श्लिष्यन्ति भिन्नं स्वरूपमपह्नवते एकवृन्तगतफलद्वयन्यायेन यथार्थद्वयप्रतीतिः स श्लेषः ।

एवञ्चैकोच्चारणापह्नुतभेदकभिन्नार्थकसदृशनानाशब्दत्वं श्लेष इति फलितम् । सकृदुच्चरित इति नियमानङ्गीकर्तृणां मते एकदा गृहीतनानातात्पर्यकः शब्द एव श्लेष इत्यपि सुवचम् । न च दुर्गालङ्घित इत्यादाविवात्रापि अर्थान्तरे व्यञ्जनैवास्त्विति वाच्यम्, प्रकरणादीनां तुल्यत्वेनैकत्राभिधाननियन्त्रणाभावात् । तस्मान्नानार्थेषु श्लिष्टेषु यत्रानेकत्र तात्पर्यग्राहकं युगपदवतरति नावतरति वा तत्र श्लेषः । यत्र तु क्रमेण तत्र आवृत्तिः सा च पुनरनुसन्धानं यथा अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ताम् इति अत्रान्वयिपदार्थभेदाद् बोद्धुरावृत्त्यैव बोधः उच्चारणं तु—तन्त्रेणैव । यत्र त्वेकत्रैव तत्र व्यञ्जनेति व्यवस्थितिः । नानार्थेषु श्लिष्टेषु यत्रानेकत्र प्रकरणादिकं युगपदवतरति तत्रैव श्लेष इति तु न वाच्यम् । अनेकत्र प्रकरणाद्यनवतारे 'योऽसकृत् परगोत्राणाम्' इत्यादौ श्लेषानापत्तेरित्यनुसन्धेयम् । एवञ्च तर्कवागीशैः सकृदुच्चरितेति न्यायमवतारयद्भिः यदुक्तमत्र तत्समीचीनमेव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदाः—( क ) श्लेषः अष्टप्रकारको भवति—१. वर्णश्लेषः, २. प्रत्यय-श्लेषः, ३. लिङ्गश्लेषः, ४. प्रकृतिश्लेषः, ५. पदश्लेषः, ६. विभक्तिश्लेषः, ७. वचनश्लेषः, ८. भाषाश्लेषश्च । यथोक्तम्—

'वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ।
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ॥'

१. वर्णश्लेषः । यथा—

'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥'

विधि-विधुशब्दयोर्विजातीययोरपीकारोकारयोः 'अच्च घेः' इति सूत्रेण औ तुल्यरूपता । तस्मात् औकारमाहात्म्येनाभिन्नप्रयत्नोच्चार्यत्वमिति विधि-विधुशब्दप्रतिपाद्यार्थद्वयोरपि तयोर्वैचित्र्यातिशयजनकत्वात् वर्णश्लेषः । चन्द्रस्य प्रतिकूलतायां क्रियमाणं निखिलं विपरीतं भवतीति दैवज्ञानां सिद्धान्तः । अत्रापि सन्ध्यामुखे तदुदयपदप्राप्तेरेव सूर्यस्य बहुसाधनता विफलत्वमेतीति माघस्याशयः नवमे सर्गे ।

२. प्रत्ययश्लेषः । यथा—

'किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः ।
कान्तोत्सङ्गजुषां नूनं सर्व एव सुधाकिरः' ॥

अत्र सुधाकिरः इति क्विप्-क-प्रत्यययोः श्लेषः । यद्यप्यत्र वचनश्लेषो लिङ्गश्लेषोऽपि । तथापि प्रत्यययोः चमत्कारित्वात् तदुदाहरणम् ।

३. लिङ्गश्लेषः । यथा—

'विकसन्नेत्रनीलाब्जे तदा तन्व्याः स्तनद्वयी ।
तव दत्तां सदामोदं लसत्तरलहारिणी' ॥

४. प्रकृतिश्लेषः । यथा —

'अयं सर्वाणि शास्त्राणि हृदि ज्ञेपु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः' ॥

'वक्ष्यति' इत्यत्र वहि-वच्योः 'सामर्थ्यकृत्' इत्यत्र कृन्ततिकरोत्योः प्रकृत्योः श्लेषः ।

५. पदश्लेषः । यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति समभावयोः सदनम्' ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृथुकार्तस्वरादिपदानामेवाऽत्र श्लेषेण वैचित्र्यातिशयोत्पादनात् पदश्लेषः।

६. विभक्तिश्लेषः। यथा—

'सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसाम्मुख्यमायासि तनुवर्तनम् ॥'

अत्र हर इति पक्षे शिवसम्बोधनमिति सुप्। पक्षे हृधातोस्तिङिति विभक्तेः।

७. वचनश्लेषः। यथा—

द्वितीये प्रत्ययश्लेषोदाहरणे किरणा इत्यनेन सम्बन्धाय सुधाकिर इति प्रथमाबहुवचने रूपम्। समीरणः इत्यनेन सम्बन्धाय प्रथमाया एकवचने रूपम् इति वचनश्लेषः।

८. भाषाश्लेषः। यथा—

'महदे सुरसन्धं मे तमव समासङ्गमागमा हरणे।
हर बहु शरणं तं चित्तमोहमवसर उमे सहसा ॥'

अत्र संस्कृतमहाराष्ट्रयोः।

(ख) अष्टविधोऽयमलङ्कारः पुनस्त्रिधा भवति—१. सभङ्गः, २. अभङ्गः, ३. सभङ्गाभङ्गश्च। यथोक्तम्—

'पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः'।

उदाहरणं च—

'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'

अत्र येन इत्यादौ सभङ्गः। अन्धक इत्यादौ अभङ्गः। अनयोश्चैकत्र सम्भवात् सभङ्गाभङ्गात्मकः।

शब्दश्लेषत्वार्थश्लेषत्वविमर्शः—सभङ्ग एव शब्दश्लेषस्य विषयः। यत्रोदात्तादिस्वरभेदात् भिन्नप्रयत्नोच्चार्यत्वेन भिन्नयोः शब्दयोर्भवति जतुकाष्ठन्यायेन श्लेषः। अभङ्गश्चार्थश्लेषः यत्र एकवृन्तगतफलद्वयन्यायेन श्लेषः। यो हि यदाश्रितः स तदलङ्कारः। एतत् काव्यप्रकाशकारादयः न स्वीकुर्वन्ति। तथा हि—अत्र ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति। न च 'अन्धकक्षय' इत्यादौ शब्दभेदः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अर्थभेदेन शब्दभेद' इति दर्शनात्। किं चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कनाच्छब्दालङ्कारत्वमेव। विसदृशशब्दद्वयस्य बन्धे, नैवंविधस्य वैचित्र्याभावाद् वैचित्र्यस्यैव चालङ्कारत्वात्।

'अर्थमुखप्रेक्षितया चार्थालङ्कारत्वेऽनुप्रासादीनामपि रसादिपरत्वेन अर्थमुखप्रेक्षितया अर्थालङ्कारत्वप्रसङ्गः। शब्दस्याभिन्नप्रयत्नोच्चार्यत्वेन अर्थालङ्कारत्वे 'प्रतिकूलतामुपगते हि विधौ' इत्यादौ शब्दभेदेऽप्यर्थालङ्कारत्वं तवापि प्रसज्यति इत्युभयत्रापि शब्दालङ्कारत्वमेव। यत्र तु शब्दस्य परिवर्तनेऽपि न श्लेषत्वखण्डना, तत्र—

'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥'

इत्यादावर्थश्लेषः। अस्य चालङ्कारान्तरविविक्तविषयतायाः असम्भवाद् विद्यमानेष्वलङ्कारेष्वपवादत्वेन तद्बाधकतया तत्प्रतिभोत्पत्तिहेतुत्वमिति वामनादयः।

अर्थद्वयस्याभिधेयत्वे एव श्लेषालङ्कारत्वमिति नियमात् समासोक्ति-अप्रस्तुतप्रशंसा-पर्यायोक्ति-आर्थपरिसंख्या-विरोधाभासादौ द्वितीयार्थस्य व्यञ्जनाविषयत्वात् श्लेषस्य नास्त्यवसरः। रूपकस्य श्लेषबाधकत्वात्। श्लिष्टपरम्परितरूपकेऽपि श्लेषोऽनवसरः। श्लेषे अर्थद्वयप्रकटने एव कवेरभिप्रायो भवति। व्यञ्जनायां च तथा न भवति। तत्र कवेरभिप्रायो भवति एकस्मिन्नेवाऽर्थे। प्रकरणादिना वाचकत्वनियामिकया अभिधया तदेव बोध्यते। अन्यश्चार्थो बोध्यते व्यञ्जनयेति ध्वनिश्लेषयोर्भेदः।

सारांशः—शब्दश्लेषस्य शब्दालङ्कारता अर्थश्लेषस्य चार्थालङ्कारतेति मम्मटः तदनुगन्तारो विद्वान्सः प्रदीपकारादयश्च द्विविधोऽपि श्लेषः शब्दालङ्कार एव इति केचित्। अर्थालङ्कार इति अलङ्कारसर्वस्वकारादयः। शब्दश्लेषे पर्यायपरिवर्तनाभावः। अर्थश्लेषे च पर्यायपरिवर्तनं सम्भवमिति।

## ( २२ ) गद्यस्योद्भवविकासौ

( १९८६ )

अथवा

## गद्यं कवीनां निकषं वदन्ति

( १९८३ )

गद्योद्भवः—गद्यसाहित्यस्योद्भवः कृष्णयजुर्वेदस्य तैत्तिरीयसंहितात् अभूत्। काठकसंहितायां मैत्रायणीसंहितायामपि गद्यांशा सन्ति। अथर्वणः षष्ठो भाग

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव गद्यात्मकः। ब्राह्मणेषु आरण्यकेषु उपनिषत्सु च सन्ति गद्यांशाः। दर्शनग्रन्थेषु[१] चरकसंहितायां चापि गद्यप्रयोगाः दृश्यन्ते। कात्यायनः[२] पतञ्जलिरपि[३] गद्येन परिचितौ। रुद्रदाम्नः गिरिनारशिलालेखे गुप्तशिलालेखेषु[४] चोपलभ्यते गद्यप्रयोगः। आलङ्कारिकेषु भामहोऽस्ति[५] परिचितो गद्येन। भामहमतमालोचयता दण्डिनाऽपि[६] व्यक्तं स्वीयं गद्यज्ञानम्। [७]रुद्रटहेमचन्द्रावपि[८] गद्यपरिचितौ। सिद्ध्यति गद्यलेखनपरम्परा विपुलेति विद्वान्सः[९]। अमरसिंहोऽपि[१०] गद्यधारया परिचितः। लक्ष्यग्रन्थाऽभावे लक्षणग्रन्थकाराणां विचिकित्सेति पं० बलदेवोपाध्यायाः[११]। नैतद् रुचिरम्। बाणादिना प्रस्तुता परम्परा एकदिननिर्वृत्ता नास्ति।

गद्यविकासः—गद्यस्य रूपत्रयमवलोक्यते—१. वैदिकरूपम्, २. वैदिकेतररूपम् ३. साहित्यिकरूपञ्च।

(१) वैदिकरूपम्—वैदिकं गद्यं सरलम्। यथा—

'तत् सत्यमभवत् तेन प्रजायता।' (अथर्व० १५ काण्ड, १ सूत्र)

\+ + + +

'अग्निर्वै देवानामवनो विष्णुः।' (ऐतरेय० १)

\+ + + +

'यत्र नान्यत् पश्यति।' (छान्दोग्य० ७।२४)

---

१. शबरस्वामी, शङ्कराचार्य, जयन्तभट्ट।

२. 'लुगाख्यायिकेभ्यो बहुलम्'।

३. 'अधिकृत्य कृते ग्रन्थे'—वासदत्ता सुमनोत्तरा, भैमरथी।

४. फ्लीट—गुप्तकालीन शिलालेख।

५. काव्यालङ्कारः १।२५।२९।

६. काव्यादर्शः १।२३-२८।

७. काव्यालङ्कारः १६।२०-२३।

८. काव्यानुशासनम्, पृ० ४०६-७।

९. एस० एन० व्यास—ओरिजिन एण्ड डेवेलपमेण्ट आफ संस्कृत प्रोज—सं० गद्यमंजरी वी मू०।

१०. अमरकोष १।५।५–६।

११. सं० सा० का इति० पृ० ३७७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( २ ) वैदिकेतरम्—'यथैव व्योम्नि वह्निपिण्डीपमं त्वामहमपश्यम् ।'

( विष्णुपुराणम् ४।१३।४ )

'रुद्रदाम्ना सेतुं सुदर्शनंतरं कारितम् ।'

( गिरनारशिलालेखे )

'ये पुनः कार्याभावा निवृत्तौ तावत् तेषां यत्नः क्रियते ।'

( पस्पशाह्निके )

'न तानि प्रत्यस्माकमिच्छा भवति ।'

( शबरस्वाभिनः )

'न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हति ।'

( शङ्कराचार्यस्य )

'न च ब्रह्मणोऽविद्या ।'

( जयन्तभट्टस्य )

लोकप्रचलितगद्यस्वरूपं पालिगद्येषु द्रष्टुं शक्यते ।

( ३ ) साहित्यिकरूपम्—( क ) साहित्यिकगद्यस्य प्रथमं दर्शनं सुबन्धुरचितस्य वासवदत्ताख्ये ग्रन्थे भवति । बाणभट्टप्रशंसितत्वात् तस्मादुत्तरवर्तिता सिद्ध्यत्यस्य । कालिदासस्याभिज्ञानशाकुन्तले वर्णितायाः दुर्वाससः शापघटनायाः महाभारतादौ अलिखितायाः स्मरणात् कामसूत्रविधातुर्वात्स्यायनस्य चोल्लेखात् सिद्ध्यति पश्चाद्वर्तिताऽस्य । कालिदासस्य समयः प्रथमशताब्दी चतुर्थशताब्दी वेति इतिहासकाराः[1] । वात्स्यायनस्य च पञ्चमशताब्दी[2] । हर्षवर्धनस्य समयः ( ६०६-६४८ ई० ) सप्तमशताब्द्याः पूर्वार्धोऽस्ति । बाणश्चास्य सभापण्डितः । अत एवास्य समयोऽपि स्वीकरणीयोऽयमेव[3] ।

अस्य एका एव रचना वासवदत्तेति । तत्र श्लेषस्य प्राचुर्यम् । यथा—'नन्दगोप इव यशोदयान्वितः जरासन्ध इव घटित सन्धिविग्रहः ।' उत्प्रेक्षाविरोधयोरपि प्राचुर्यमत्र वर्तते । उपमाप्यस्ति । किन्तु सर्वत्र चमत्कारस्य कारणं श्लेष एव । श्लेषातिरिक्तं यत्किञ्चिल्लिखितं तत् सुष्ठु । 'कोशं पश्यन् पदे पदे' इत्युक्तिरत्र चरितार्था । कविदर्पहारिणी रचनेयमिति विदुषां विश्वासः । यथोक्तम्—

१. बलदेव उपाध्याय—सं० सा० का इति० पृ० ३८३ ।

२. " " "

३. वा० गैरोला—सं० सा० का इति० पृ० ७६६ ।

कीथ—हिस्ट्री आफ संस्कृत लिटरेचर, पृ० ७७ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥'

( ख ) संस्कृतगद्यस्य मुकुटमणिरस्ति बाणः । अयं सप्तमशताब्द्याः पूर्वार्द्धेऽभवत् । हर्षवर्धनस्य च सभापण्डितः । 'वाणी एव बाणो बभूवे'ति बहूनां विश्वासः । हर्षचरित-कादम्बरीनामानौ द्वौ ग्रन्थौ बहुप्रसिद्धौ । हर्षचरितात्मिलति कवेर्जीवनविषयिणी सूचना । हर्षस्य कलाकुशलं जीवनम् । वीररसस्यात्र प्राधान्यम् । करुणोऽप्यरुणायतेऽत्र । किम्बहुना इयमाख्यायिका अद्यावधिनिदर्शनभूता । कादम्बरी तु मानवमनसः स्पन्दनशीलता । दर्शनमात्रेणैव विरागयुक्तमपि मनः रागायते इति द्रष्टुं शक्यते पुण्डरीके । प्राकृतिकोद्दीपनोद्दीपितं रमणीमनः विवेकशून्यं भवतीति दृश्यते महाश्वेतायाम् । सृष्टौ स्वल्पोऽपि जीवः स्वस्मात् श्रेष्ठः इति दर्शयति कविः चन्द्रापीडस्य घोटकप्रणामावसरे । छात्रनिर्माणाय नृपाङ्कुशविरहिताः किन्तु राज्यधनपोषिताः गुरव एव सक्षमा इति कथयति चन्द्रापीडशिक्षणमाध्यमेन । संस्काररहितो देवपूजनाय नियुक्तो जनो नाकर्षयति लोकनेत्रं न वा करोति स्वोचितं कर्म इति वदति कविः द्रविडधार्मिकमाध्यमेन । किमधिकं, संस्कृतसाहित्ये कादम्बरी एव सर्वोपरि तिलकायते । सैव मानदण्डभूता । स्वीकरोति च त्रिलोचनः पश्चाद्वर्तिलेखने चापल्यमेव कारणम्—

'हृदि लग्नेन बाणेन यन्मदोऽपि पदक्रमः ।
भवेत् रविकुरङ्गाणां चापलं तत्र कारणम् ॥'

पाञ्चालीरीति निदर्शनभूता बाणोक्तिरेवेति राजशेखरः—

'शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते ।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥'

संसारमनोहरणे बाणस्यैव वाणी सक्षमेति मतिर्धर्मदासस्य—

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥'

गोवर्धनमतेऽवतारोऽयं सरस्वत्याः—

'जाता शिखण्डिनी प्राग् यथा शिखण्डी तथाऽवगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥'

( ग ) काव्यादर्शविधातुर्दण्डिनः नाम को न जानाति । किन्तु समयोऽस्य विवादास्पदम । सिङ्हलीभाषायाः 'सियबसलकर' नामिकायाः रचना काव्यादर्श-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यैवाधारं स्वीकृत्य कृता[1]। तस्य रचनाकारस्य समयोऽस्ति ८४६–६६ ई० यावत्। अमोघवर्षविहितस्य कविराजमार्गनामकग्रन्थस्य रचना अपि काव्यादर्शाधारेणैव कृता[2]। अमोघवर्षस्य कालः ८१५ ई० अस्ति[3]। कालिदासात् बाणाच्च प्रभावितोऽयमिति बहवः[4]। अतोऽस्य कालः सप्तमशताब्द्या उत्तरार्धम् इति विदुषां विचारः[5]।

अस्य त्रयः प्रबन्धाः इति राजशेखरः[6]। तत्र काव्यादर्शः सर्वं स्वीकृतः। दशकुमारचरितं बहुभिः स्वीकृतम्। अवन्तिसुन्दरीकथा च कैश्चित् स्वीकृता। प्रथमस्तु लक्षणग्रन्थः। शिष्टौ गद्यकाव्ये। दण्डिनः पदलालित्यं पण्डितमण्डलीषु प्रसिद्धम्। अस्य गद्यशैली सुबोधा, सरला, सरसा व्यावहारिकी च। दशकुमारचरितस्याध्ययनं राष्ट्रभाषासमृद्धकरम्। दैनन्दिनव्यवहारोपयोगिशब्दज्ञापकं च।

( घ ) काश्यपगोत्रीयस्य जैनमतावलम्बिनः मुञ्जराजसभास्थस्य दशमखिस्ताब्दजस्य धनपालस्य तिलकमञ्जरी अपि विदुषां तिलकमञ्जरीषु अन्यतमा। अस्याः भाषा ओजोयुक्ता प्रभावशालिनी च। वर्णनं नवीनम्। सर्वत्र बाणस्यानुकरणं च। वीररसवर्णनमस्य दर्शनीयमेव। ऋषभपञ्चाशिका, पाइडलच्छी नाममाला चास्य शिष्टाः रचना।

( ङ ) १. गद्यचिन्तामणिरचयिता वादीभसिंहोऽपि नयनगोचरो विदुषाम्। अस्य शैली अलङ्कृता। जीवन्धरस्य कथाऽत्र एकादशलम्बकेषु वर्णिता। अयम् एकादशशताब्द्यामासीत् इति पं० बलदेवोपाध्यायः[7]। हरिश्चन्द्रः प्रस्तौति स्वीये जीवन्धरचम्पूकाव्ये संक्षिप्तं कथानकं वादीभसिंहरचनायाः।

---

१. वार्नेट—जर्नल आफ दी रायल एशियाटिक सोसाइटी १९०५।
२. ब० उपाध्याय—सं० सा० का इति० पृ० ४०१।
३. ,, ,, ,,
४. ,, ,, ,,
५. पाठक—इण्डियन एण्टीक्वेरी १९१२।
आर० नरसिंहाचार्य ,, १९१२।
बेलवल्कर—द्वितीय परिच्छेद पर टिप्पणी (काव्यादर्श) पृ० १४६–७७।
६. शाङ्गंधरपद्धति तथा पीटरसन—सुभाषित ग्रन्थावली की भूमिका, पृ० १०।

७. सं० सा० का इति० पृ० ४०९।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२. मोढ्ढलस्य उदयसुन्दरीकथा, अगस्त्यस्य कृष्णचरितं नाम गद्यकाव्यमपि मिलति ।

( च ) श्रीरङ्गमस्थवाणीविलासमुद्रणालयात् प्रकाशितं वेमभूपालचरितं वीरनारायणचरितं वा वामनभट्टबाणस्य गद्यकाव्यम् । त्रिलिङ्गप्रदेशशासकस्य कामनामकराजवंशे समुत्पन्नस्य कोमटीन्द्रशासनोत्तरं १४०३ ख्रिस्ताब्दे शासनारूढस्य दानशीलस्य वेमभूपालस्यैव सभाकविरासीत् वामनभट्टबाणो वत्सकुलोत्पन्नः कोमटियज्वपुत्रः । षड्भाषावल्लभः कविसार्वभौमः अभिनवभट्टबाणश्चास्य उपाधिरासीत् । मधुरपदविन्यासः सरसालङ्कारप्रयोक्ता कविरयं लिलेख काव्यं, नाटकं कोषादिकं च ।

( छ ) १. अल्मोड़ाजनपदस्य पाटियाग्रामे निवासी लक्ष्मीधरो भरद्वाजगोत्रः काश्यामागत्य भूतभावनकृपयाऽजीजनत् विश्वेश्वरं मन्दारमञ्जरीनामकगद्यकाव्यविधातारम् । समयोऽस्याष्टादशशताब्द्याः[1] पूर्वार्धः । कादम्बरी इव पूर्वार्द्धं मन्दारमञ्जर्याः विश्वेश्वरकृतमुत्तरार्धं च केनापि शिष्येण प्रणीतम् इति जनश्रुतिः । बाणानुगमनकारिणी शैली अस्याः । नवीनता चाक्षता । यथा—

'गौणार्थपरिग्रहः शब्देषु न क्रियासु पृष्ठदर्शनं सामप्रयोगेषु न सङ्गरेषु' ।

२. पं हृषीकेशभट्टाचार्यस्य प्रबन्धमञ्जरी सुन्दरी गद्यरचना अस्ति ।

( ज ) जयपुरे जातस्य विहारे सेवानिरतस्य दुर्गादत्तसुतस्य अम्बिकादत्तव्यासस्य द्वादशनिश्वासात्मकः शिवराजविजयः गतशताब्द्यां रचितो विशिष्टो मणिर्गद्यकाव्यस्य । शिववीरो नायकः । राष्ट्रदशाचित्रणं चोद्देश्यम् । भाषा सरला । भावबोधनक्षमा प्रसङ्गानुसारिणी च ।

( झ ) पीटर्सनमहोदयेन रामकल्पद्रुमनाम्नः गद्यकाव्यस्योल्लेखः कृतः स्वीये सूचीपत्रे ।

( ञ ) पण्डिता क्षमा सदा स्मरणीयास्ति संस्कृतज्ञैः प्राचीनभाषायां नवान् प्राणान् सञ्चारयन्ती । तदीया कथामुक्तावली कथानां कमनीयः संग्रहः इति सूचयति डा० रमेशचन्द्र शुक्लः प्रबन्धरत्नाकरे ।

( ट ) रामस्वरूपशास्त्री, ब्रह्मानन्दशुक्लः, वेङ्कटराघवः, नारायणशास्त्री 'खिस्ते', द्विजेन्द्रशास्त्री, विद्याधरशास्त्री चापि गद्यकाररूपेण परिगणिताः डा० रमेशचन्द्रशुक्लमहोदयैः । किन्तु किं तैः लिखितं गद्यकाव्यमिति तु न सूचितम् ।

---

१. ब० उपाध्याय—स० सा० का इति० पृ० ४१० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ठ ) लाहौरनगरे जातः सत्यव्रतशास्त्री शोधनिवन्धेभ्यः नागपुरे जातः श्रीधरभास्कर वर्णेकरः—महाभारतकथानामक गद्यसाहित्याय शोधपत्रादिकाय १९०६ ई० वर्षे नासिकपञ्चवटीस्थाने समुत्पन्नः विश्वनाथकेशवच्छत्रे-महानुभावः गोष्ठीरूपगीतानामकाय गोन्धानामकाय च गद्याय श्रीकृष्णशर्मा धिमिरे महाभागः श्रीकृष्णगद्यसङ्ग्रहाय च स्मरणीयाः इति सूचयति डा० रहसविहारीद्विवेदी अर्वाचीनसंस्कृतमहाकाव्यानुशीलने ।

( ड ) २०३८ विक्रमसंवत्सरीयायाः सागरिकायाः तृतीयेऽङ्के १०७ पृष्ठे श्री पं० वेदव्यासशुक्लविरचितस्य सौप्रभनामकगद्यकाव्यस्य चर्चा वर्तते। लिखितं च 'सौप्रभे नाम्नि गद्यकाव्ये श्रीमता वेदव्यासशुक्लेन गद्यगुम्फने किमपि पाटवमाविष्कृतम् । वाणभट्टस्य सरणिमात्मसात्कर्तुमयमतितरां संरभते तत्र सफलश्रमश्च दृश्यते । वाणभट्टवदेवाऽयं वर्णनेषु प्रगल्भते परिसंख्याद्यलङ्कार-प्रयोगे च मुखरः प्रतीयते । काव्येऽस्मिन् प्रस्तावनावर्णनानन्तरं विलसन्ति ग्राम-गृह-सुप्रभ-कामिनी-स्थाणु-मार्जारी-सरयू-देवल-गृह-वनाऽऽश्रम-चण्डिका-संवसथ-पिष्टातकप्रभृति समावर्तनान्तास्त्रयोविंशतिवर्णनाः । वर्णनेषु कविः क्वचित् संस्कृतवाङ्मयवैदुषीं विदग्धतां च लासयति नवीनकल्पनामनोहराभिरुक्तिभिः । तद्यथा राजवल्लीनगरीवर्णने—'सा च भारविरचना इवार्थगम्भीरा, दण्डि-पदसङ्घटनेव प्रतिपदलालित्यमनोहरा, कालिदासोपमेव निरुपमा, वाणकादम्बरीव साच्छोदसरसा, नैषधपुस्तिका इव सनला, नृपभीमवालिकेव लोकत्रयं दमयन्ती, विज्जिकेव श्यामा' । कादम्बरी वाऽत्रापि कथान्तर्गर्भिताः कथाः दृश्यन्ते । शूद्रक-राजसभायामिव शुकवृत्तान्तवत् उद्योतनृपतेः सभायामत्र विस्मयावह मार्जार-वृत्तान्तो विनिवेद्यते । अनेकजन्मपरम्पराश्चात्रान्तर्भाविता. ।

( ढ ) सागरविश्वविद्यालये संस्कृतविभागस्य 'आचार्योऽध्यक्षश्च डा० राधावल्लभत्रिपाठी सूचयति कौमारं नाम गद्यकाव्यम्'। यथा—'गद्यं कवीनां निकषं वदन्ती'त्याभाणकं चरितार्थयन् कौमारकारः प्रवन्धेऽस्मिन् गद्यबन्धस्य कामपि छटां प्रकटीकुरुते । गद्यसरणिरस्यातीव मनोहारिणी । क्वचिद् युगानु-कूलां प्राञ्जलतां, क्वचिद् वासवदत्तानिबद्धुः सुबन्धोः प्रगल्भतां, क्वचिद् वाग्देवतावतारस्य वाणस्य वैदग्धीं, क्वचिच्च दण्डिनः पदलालित्यं समुल्लासयन्ती रसिकानमन्दसौन्दर्यानन्दसन्दोहे निमज्जयति । कविरयं संस्कृतशब्दभाण्डारा-पारपारावारं गाहं गाहं शब्दरत्नानि गृह्णन् वाग्देवतायाः कृते चित्रं ग्रैवेयकं ग्रथ्नाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ण ) अस्माद् भिन्नं प्रकाशितमप्रकाशितं वा शोधनिबन्धरूपं गद्यसाहित्यमपि विलसति । तत्र प्रकाशितं यथा डा० श्रीकृष्णमणित्रिपाठिनः पुराणपर्यालोचनं भागद्वयात्मकं, डा० रमेशचन्द्रशुक्लस्य प्रबन्धरत्नाकरः, डा० वेदव्यासशुक्लस्य किरातार्जुनीयशिवपुराणयोस्तुलनात्मकमध्ययनम् इत्यादि । अप्रकाशितं च विश्वविद्यालयेषु उपाध्यर्थं समुपस्थापितं प्रतिदिनं स्फीयमानम् ।

( त ) संस्कृतपत्रपत्रिकासु समये समये प्रकाशिताः विभिन्नविषयका लेखाः टीकारूपेण भूमिकारूपेण च लिखिताः शताधिकाः लेखा अपि गद्यस्य गौरवं वर्धयन्त्येव । यथा—पूज्यकरपात्रमहोदयानां भागवते जगत्कारणमीमांसा, प्रकाशितपुस्तकानां भूमिकाश्च ।

## ( २३ ) विंशशताब्द्याः महाकाव्यानि

( १९८३ )

विंशशताब्द्यां रचितानां महाकाव्यानां संख्या स्वल्पा नास्ति । संस्कृतानुरागिणां जिजीविषा स्वरो दृश्यते मुखरः महाकाव्यनिर्माणे विषयास्तु विविधाः । प्राचीनाः अर्वाचीनाश्च । देशान्तरस्थपुरुषा अपि नायकत्वेन स्वीकृता । राष्ट्रनेतारोऽपि भारतस्य महाकाव्यविषयतां गताः । भाषायामपि वैविध्यमवलोक्यते । विचारधारास्वपि परिवर्तनमक्षिपथमायाति । सर्वमिदं संक्षेपेणाग्रे द्रक्ष्यामः । पूर्वं कवयः स्वरचनासमुदयेन सह समुपस्थाप्यन्ते ।

| कविः | पितुर्नाम | जन्मकालः | जन्मस्थानम् | महाकाव्यम् |
|---|---|---|---|---|
| १. प्रभुदत्त शास्त्री | श्रीरामशरणमिश्रः | १९४९ वि० | ततारपुर | गणपतिसम्भवम्, भारतविजयम् । |
| २. काशीनाथः | श्री रुद्रदत्तशर्मा | १९५४ वि० | पीपरीपर | रुक्मिणीहरणम् । |
| ३. विष्णुदत्तशुक्लः | | १८९५ ई० | उन्नाव | गङ्गासागरीयम् । |
| ४. रेवाप्रसाद द्विवेदी | श्रीनर्मदाप्रसाद द्विवेदी | १९३५ ई० | नादनेर | सीताचरितम् । |
| ५. डा० सत्यव्रत शास्त्री | श्रीचारुदेवशास्त्री | १९३० ई० | लाहौर | बोधिसत्त्वचरितम्, इन्दिराचरितम् । |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| कविः | पितुर्नाम | जन्मकालः | जन्मस्थानम् | महाकाव्यम् |
|---|---|---|---|---|
| ६. डा० श्रीधर-भास्करवर्णेकरः | | १९१९ ई० | नागपुर | शिवराज्योदयम् । |
| ७. उमाशङ्करशर्मा | श्रीरामनरेश-मणि त्रिपाठी | १९२२ ई० | सिंगहा देवरिया | छत्रपतिचरितम् । |
| ८. माधवः | श्रीहरिः | १८८० ई० | पुण्यपत्तन महाराष्ट्र | तिलकयशोऽर्णवः । |
| ९. विश्वनाथ केशवच्छत्रे | श्रीकेशवशास्त्री | १९०६ ई० | नासिक पञ्चवटी | सुभाषचरितम्, एकनाथचरितम्, सातवलेकर-चरितम् । |
| १०. ब्रह्मानन्दशुक्लः | श्रीभाईदयाल शुक्लः | १९०४ ई० | चरथावल मुजफ्फरपुर | श्रीनेहरुचरितम् । |
| ११. साधुशरण-मिश्रः | श्रीजयराममिश्रः | | हथुआ बिहार | गान्धिचरितम् । |
| १२. पद्मशास्त्री | | १९३५ ई० | सिगाली अल्मोडा | लेनिनामृतम् । |
| १३. जगुबकुलभूषणः | | | | अद्भुतदूतम् । |
| १४. विन्ध्येश्वरी-प्रसाद शास्त्री | | | सरादा चम्पारण | कर्णार्जुनीयम्, ज्ञानानन्द-चरितम् । |
| १५. डा० जगन्नाथ पाठकः | | १९३४ ई० | सासाराम रोहतास | किरातार्जुनीयम् । |
| १६. श्रीकृष्णशर्मा धिमिरे | | | नेपालः | श्रीकृष्णचरितामृतम् । |
| १७. छज्जूरामशास्त्री | | | देहली | परशुराम-दिग्विजय-महाकाव्यम् । |
| १८. राजेन्द्रमिश्रः | | २००० वि० | द्रोणीपुर जौनपुर | वामनावतरणम् । |


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| कविः | पितुर्नाम | जन्मकालः | जन्मस्थानम् | महाकाव्यम् |
|---|---|---|---|---|
| १९. ज्ञानसागरः | | १९४८ वि० | रणोली जयपुर | सुदर्शनोदयम्, जयोदयम्, वीरोदयम्। |
| २०. ओगेटिपरीक्षित-शर्मा | | १९३० ई० | | यशोधरा-महाकाव्यम्, प्रतापनारायणम्। |
| २१. नारायणशुक्लः | श्रीकमलेश्वर-शुक्लः | १९६५ वि० | खोड़ा देवरिया | ऊर्मिलीयं महाकाव्यम्। |
| २२. परमेश्वरदत्त त्रिपाठी | | १९५० वि० | उजियार-भभौली बलिया | रक्ताक्त-रक्ताक्त-हिमालयम्। |
| २३. विद्याधरशास्त्री | | १९०१ ई० | बीकानेर | विश्वमानवीयम्, हरनामामृतम्। |
| २४. सुबोधचन्द्रपन्तः | | १९३२ ई० | प्रयागः | झाँसीश्वरी-चरितम्। |
| २५. हरिप्रसादद्विवेदी | | | वण अलीगढ़ | गोस्वामी तुलसीदास-चरितम्। |
| २६. त्र्यम्बक शर्मा | | | | श्रीस्वामी विवेकानन्द-चरितम्। |
| २७. के० बालराम पणिकरः | | | | श्रीनारायण-विजयम्। |
| २८. रामकुबेरमालवीयः | | १९०६ ई० | कड़ा प्रयागः | श्रीमालवीय-चरितम्। |
| २९. द्विजेन्द्रनाथ शास्त्री | | १८९२ ई० | पारसौली मुजफ्फरपुर | स्वराज्यविजय-महाकाव्यम्। |
| ३०. रामसेवक-मालवीयः | | | | भ्रूभामिनी-विभ्रमम्। |
| ३१. दुर्गादत्तशास्त्री | | | | तर्जनी |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| कविः | पितुर्नाम | जन्मकालः | जन्मस्थानम् | महाकाव्यम् |
|---|---|---|---|---|
| ३२. लोकनाथ शास्त्री | | | | गान्धिविजय-महाकाव्यम् । |
| ३३. सुधाकरशुक्लः | | | दतिया म० प्र० | गान्धिसौगन्धिकम्, भारती-स्वयंवरम् । |
| ३४. पद्मनारायण त्रिपाठी | श्रीसहदेवः | | | रामचरितम् । |

**विषयवस्तुविवेचनम्**—एतेषां महाकाव्यानां विषयवस्तु लक्षणग्रन्थनिर्देश-भिन्नमपि । यथा च लिखति डा० रहसविहारी द्विवेदी अर्वाचीनसंस्कृतमहा-काव्यानुशीलने उपसंहारे १०५ पृष्ठे—एतेषां महाकाव्यानां विषयवस्तुनि वैविध्यं दृश्यते । रामायणमहाभारतश्रीमद्भागवतादितो वस्तुग्रहणेन सह भारत-राष्ट्रस्य स्वातन्त्र्यसङ्गरसेनानीनां तिलकगान्धिसुभाषादीनां स्वामिविवेकानन्द-तुलसीदासप्रभृतिमहात्मनां लेनिनादीनां च सामाजिकक्रान्तिकर्तॄणां जीवनमा-धारीकृत्य महाकाव्यानि प्रणीतानि सन्ति ।

संशोधितोऽत्र प्राक्तनो विचारः युगानुरूपः । यैः जनैः यस्मिन् क्षेत्रे लोको-त्तरा प्रेरणा प्राप्ता तैरेव कृतार्थता लोकस्य सिद्धा । कविभिश्च सादरं सर्वं समुपस्थापितं महाकाव्येषु ।

**भाषा**—महाकाव्येषु प्रयुक्ता भाषा चाधुनिकशब्दसंवलिता । यथा—

'ग्रामोफोननखा च वृद्धवनिता गीताविगीतैव सा' ।

—गणपतिसम्भवम् २।६०

'जवारीवाजरीरोटी भोजनाय दिवानिशम् ।
चुका चाकोतमेथीनां व्यञ्जनं क्षारसंयुतम् ॥'

—तिलकयशोऽर्णवः २३।२८

'रूसे जारकुशासनस्य मथनेनोन्मत्तभावान्विता ।'

—लेनिनामृतम् १।८

**युगभावनासमुद्घोषणम्**—वर्तमाने युगे राष्ट्रे प्रचलमानायाः भावनायाः दर्शनं महाकाव्येषु भवति । साहित्यं भवति दर्पणं समाजस्येति कथनं सुसिद्ध-मत्र । भारतस्य आत्मा वसति ग्रामे इति नेतॄणां कथनं स्वीकृत्य वदति कविः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'कृषौ रताः कर्षकराः सभृत्या लुनन्ति शष्पाणि मुदं कृषन्ति ।
चयन्ति घासान् मृदुगायनास्ते गदन्ति हास्यानि मिथः सुखानि ॥'
—ऊर्मिलीये ११।५०

धनस्य समानं वितरणमेवोचितम् । असमानं तु नोचितम् । यथा—
'जनेषु कस्मान्न विभज्यते समं समानरूपेण समीहितं वसु ।
न कस्यचिद्यत्सहजं समीक्ष्यते न कोऽपि तत्राधिकृतौ विशेषभाक् ॥
—रुक्मिणीहरणे ११।८८

'श्रम एव जयते' इति कथनं साधयति कविः गङ्गासागरीये—
'श्रमेणैव सिद्ध्यन्ति कार्याणि लोके श्रमेणैव लोकोत्तरत्वं सुलभ्यम् ।
श्रमेणैव चोत्कर्षतां यान्ति लोकाः श्रमं साधयध्वं श्रमं साधयध्वम् ॥'
—५।२८

अहिंसा एवाऽस्माकं नीतिः । हिंसा च नादरणीयेति मतिं सत्यव्रतशास्त्रिणः—
'हिंसैव वर्धते बह्वी हिंसकं प्रति हिंसया ।
सुखमात्यन्तिकं लब्धुमहिंसैव गरीयसी' ॥'
—बोधिसत्त्वचरिते ३।८०

स्वातन्त्र्यार्थं जीवनदानमेव वरम् । दासजीवनं मरणादपि कष्टकरम् । अतोऽस्माभिरपि स्वातन्त्र्ययुद्धे निजात्मा होतव्यः—
'क्व दासवृत्तेः परलोकपथा श्रेयोऽथवा कुत्र फलोपलब्धिः ।
तदेव पन्था यवसूनपिष्टान् स्वातन्त्र्ययागे पुरुषो जुहोति ॥'
—छत्रपतिचरिते १८।३४

स्वातन्त्र्यमपि जातिधर्मसहिष्णुतार्थं एव—
'स्वातन्त्र्यमिच्छामि तु पूर्णमेव नारीनरव्यक्तिसमाजमूलैः ।
श्रीमद्दरिद्राखिलमङ्गलार्थं धर्मस्य जातेश्च सहिष्णुतार्थम् ॥'
सुभाषचरिते ६।७।

राष्ट्रहिताय प्राणपरित्यागोऽपि करणीय एव ।
'कदापि नाहं विचलामि सत्यात् पथः स चैवं करुणां करोतु ।
शरीरमेतन्मम देशसेवारतस्य कामं विलयं प्रयातु' ॥
—नेहरूचरिते ९।२२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राष्ट्रोऽयं भारतः सर्वेषां जनानां सुखकरः स्यात् तदैव विश्वबन्धुत्वं क्षेत्स्यति ।

'हिन्दुर्यथाऽऽस्ते यवनोऽपि तद्वत् खीष्टानुयायी च जनो परोऽपि ।
तुल्योऽस्य दृष्टौ न भिदालवोऽपि समप्रवृत्ते विषमा न बुद्धिः ॥'
—गान्धीचरिते १६।३०

रसदृष्ट्याऽलङ्कारदृष्ट्या राष्ट्रभावनादृष्टया भाषादृष्ट्या च महाकाव्यानीमानि सर्वहृदयावर्जकानि युगोद्देश्यसाधकानि । विशिष्टनिरूपणाय च शोधप्रबन्ध एव ज्यायान् । न च निबन्धः ।

## ( २४ ) कालिदासः

अथवा ( १९७८ )

## कालिदासो विलासः

कदाऽभवत् कुत्र चेति प्रश्नः संशयारूढोऽद्यापि । केचित्तु कथयन्ति यद् विक्रमादित्यस्य नवरत्नेषु अन्यतमोऽयमस्ति । उदाहरन्ति च—

'धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥'

भारतीये चेतिहासे सन्ति चत्वारो विक्रमनामधारिणो राजानः । तत्र प्रथमो यशोधर्मा । ५४४ खिस्ताब्दे स प्रतापिनं राजानं मिहिरकुलं हूणवंशीयं कारूरयुद्धेऽजयत् । विजयख्यापनाय च विक्रमसंवत्सरस्थापनमकरोत् । किन्तु संवद्घोषणेयं ५८ खिस्ताब्दपूर्वतः कृतेति हार्नलीमहोदयतर्कः[1] । स च फर्गुसनमहोदयमनुगच्छति । एतेन षष्ठशताब्दामभूदयमित्यनुमा । हरप्रसादशास्त्रिणोऽपि[2] समर्थयन्ति । किन्तु ४७३ खिस्ताब्दे कुमारगुप्तप्रशस्तिकर्तृवत्सभट्टिरचनासु ऋतुसंहारप्रतिबिम्बदर्शनादस्य मतस्य सारवत्ताऽपास्ता ।

स्मिथ-मैकडानल-कीथ-भण्डारकर-पाठक-प्रभृतयो विद्वान्सः गुप्तयुगे स्वी-

१. जर्नल आफ रायल एशियाटिक सोसाइटी १९०२, पृ० ५४५ ।
२. बिहार उड़ीसा रिसर्च सोसाइटी पत्रिका भाग २, पृ० ३१-४४ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्वन्ति कालिदासम् इति गैरोला[1] बलदेवोपाध्यायश्च[2]। परन्तु गुप्तयुगात् पूर्वमपि भवति प्राप्तिः विक्रमोपाधियुक्तानां राज्ञाम्। विक्रमसंज्ञया विभूषितश्चन्द्रगुप्तद्वितीय एव नास्ति प्रथमो विक्रमोपाधियुक्तो जनः। भारतीया परम्परा सूचयति पूर्वमितोऽपि स्थितिर्विक्रमोपाधिधारिनृपस्य। ६८ ख्रिस्ताब्दे लिखिते गाथासप्तशतीनामकग्रन्थे कस्यचिद् विक्रमनृपस्य नाम मिलति येन सिद्धयति यत् कालिदासः प्रथमख्रिस्ताब्दे आसीदिति। बहवोऽनुसन्धातारः[3] स्वीकुर्वन्ति यत् कालिदासः ई० पू० प्रथमशताब्द्यामासीत्।

जीवनवृत्तम्—किंवदन्तीभिर्ज्ञायते यत् कालिदासो बाल्ये मूर्ख आसीत्। प्रबुद्धया विद्यावत्या सहास्य विवाहोऽभूत् पण्डितानां छलेन। तयाऽपमानितश्च कालिकामाराध्य कविर्बभूव। पत्नीं द्रष्टुं गृहमागतश्च द्वारं पिहितं दृष्ट्वा 'अनावृतकपाटं द्वारं देही'ति जगाद। "अस्ति कश्चिद् वाग्विशेष' इति तया पृष्टश्च काव्यत्रयं रचयति स्म। सिंहलेश्वरः कुमारदासः स्वरचित-जानकीहरणमहाकाव्यस्य प्रशंसां श्रुत्वा कालिदासं सम्मानयति स्म स्वसभायाम्। तत्रैव कयाचित् सुन्दर्या च मारितः।

किन्तु सर्वमिदं कष्टक्लिष्टमेव। भारतीयाः कामपि प्रतिभां समयेन न स्वीकुर्वन्ति। सत्यां प्रसिद्धौ कपोलकल्पनां कुर्वन्ति। वाल्मीकेश्चौर्यमिव कालिदासस्य मौर्ख्यमपि। प्रत्येकस्य विकासशीलस्य भवन्ति वैरिणः। मृत्युकल्पनाऽपि तथैव।

जन्मभूमिः—बङ्गीयाः बङ्गभुवं कालिदासस्य जन्मभूमिरूपेण स्वीकुर्वन्ति। केषाञ्चिन्मते काश्मीरेऽभवदस्य जन्म। किन्तु तत्साहित्ये तु उज्जयिनीप्रदेशाय पक्षपातो दृश्यते।[4]

---

१. संस्कृत साहित्य का इतिहास, पृ० ७२१।

२. सुकवि समीक्षा, पृ० ६७-६८।

३. जी० सी० झाला—कालिदास ए स्टडी। के० एम० सम्भवकेकर—दि डेट आफ कालिदास—कालिदास ग्रन्थावली। नन्दगीकर—रघुवंश की भूमिका। सी० वि० वैद्य—डेट आफ कालिदास, अनाल्स आफ भण्डारकर इन्स्टीट्यूट भाग २, पृ० ६३-६८। वी० वरदराजाचार्य—संस्कृत सा० का इति० पृ० ९६। वा० गैरोला—सं० सा० का इति० पृ० ७२२।

४. बलदेव उपाध्याय—सु० समीक्षा, ६४-६५।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**रचना**—काव्यचतुष्टयं नाटकत्रयं च कालिदासरचितमिति बहवः[1]—

१. ऋतुसंहारम्, २. मेघदूतम्, ३. रघुवंशम्, ४. कुमारसम्भवम्, ५. मालविकाग्निमित्रम्, ६. विक्रमोर्वशीयम्, ७. अभिज्ञानशाकुन्तलञ्च ।

**वर्ण्यविषयाः**—ऋतुसंहारे षट्सर्गेषु षड् ऋतूनां मनोहरं स्वाभाविकं च वर्णनं वर्तते । प्रथमेयं रचनेति दोषज्ञाः । कुबेरकोपभाजनस्य यक्षस्य प्रणयकथा मेघदूतेऽस्ति । मन्दाक्रान्ता छन्दसि प्राकृतिकदृश्यैः सह मानवीया भावाः सूक्ष्मेक्षिकया पूर्वोत्तरनामकभागद्वये निपुणं पर्यालोचिताः । रघुवंशे एकोनविंशसर्गात्मके रघोः पूर्ववर्तिनां पश्चाद्वर्तिनां च राज्ञामपूर्णं वर्णनमस्ति । अस्यैव महाकाव्यत्वसाधनाय लक्षणग्रन्थकारैः संशोधितं महाकाव्यलक्षणम् । मानवजीवनोत्कर्षकारकाश्चाऽऽदर्शाः सृष्टाः बहवोऽत्र । गोरक्षणमेव राष्ट्रहितावहम्, शिक्षायै राजकोषोपयोगो ज्यायान्, प्रतिभा पुष्पादपि कोमला भवति अतस्तस्याः पुष्पेणाप्याघातो न कल्पते श्रेयसे इति दर्शयति कविरिन्दुमत्यादिप्रसङ्गैः । कामुको राजा अग्निवर्णवत् स्वस्य प्रजायाश्चापि क्षेमकरो न भवति । तेजसा सह सङ्घर्षो कष्टाय एव भवतीत्याद्यपि दर्शयति कविः कौत्सवरतन्तुप्रसङ्गादिना ।

यद्यपि कुमारसम्भवे १८ सर्गाः सन्ति किन्तु प्रारम्भिकाः अष्टौ सर्गा एव कालिदासरचिता इति विद्वांसः[2] । मल्लिनाथस्य टीका अपि अष्टौ सर्गेषु एव अस्ति । लक्षणग्रन्थेषूदाहरणान्यपि एभ्य एव । प्रथमे पार्वतीजन्मप्रसङ्गेन हिमालयस्य प्राकृतिकशोभा अपि वर्णिता । द्वितीये तारकासुरनाशोपायकरणाय देवानां प्रार्थना, तृतीये कामदाहः, चतुर्थे कामपत्न्याः रत्याः विलापः, पञ्चमे पार्वतीतपः, षष्ठे सप्तमे शिवपार्वतीविवाहः, अष्टमे केलिश्च वर्णिता । ज्ञानाग्नौ वासनात्मकं कामं दाहयित्वैव प्राप्तुं शक्यते वास्तविकं प्रेम इति कविविचारोऽत्रानुस्यूतः । स्नेहसिद्धिरपि तपसैव ।

मालविकाग्निमित्रं नाम नाटके शुङ्गवंशीयस्य राज्ञः अग्निमित्रस्य मालविकया सह कृता प्रेमकथा एव निबद्धा । सपत्नीनामीर्ष्या, प्रधानमहिष्याः धारिणीदेव्याः धैर्यं, चातुर्यं नृपस्य कामुकत्वं चात्र प्रदर्शितम् ।

---

१. आर० डी० कर्मकर—दि क्रोनोलाजिकल आर्डर आफ कालिदासाज वर्क्स । वा० गैरोला—सं० सा० का इति० पृ० ७२३ ।

२. ब० उपाध्याय—सुकवि समीक्षा, पृ० ७१ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विक्रमोर्वशीये पुरुरवस उर्वश्या सह प्रेमकथा चित्रिता साकं विरहव्यथया। वेदब्राह्मणादौ वर्णिता कथा एवाऽत्र कविना संस्कृत्य स्वीकृता। माङ्गलिकप्रेमस्वीकृतिरेव लक्ष्यं गृहस्थधर्मस्येति कवेरुपदेशोऽत्र।

अभिज्ञानशाकुन्तलं तु कालिदासरचनापीयूषम्। भारतीयानां मते नाटकेषु तिलकायतेऽभिज्ञानशाकुन्तलम्। उक्तं च—

'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला'।

हस्तिनापुरनृपो दुष्यन्तो मृगयार्थं वनं याति। तत्र कण्वरहिते तदाश्रमे शकुन्तलां दृष्ट्वा स्निह्यति नृपः। ऋषिप्रार्थनयाऽऽश्रमे वसन् शकुन्तलाजन्मकथानकं श्रुत्वा गान्धर्वविधिना तां स्वीकरोति। तीर्थयात्रात उपावृत्तः कण्वः सर्वमिदं ज्ञात्वा शकुन्तलां प्रेषयति ऋषिरक्षितां हस्तिनापुरम्। अलीकभाषिणीं मत्वा राजा तां न स्वीकरोति। विलपन्तीं तां दिव्यप्रकाशमाध्यमेन मेनका मरीच्याश्रममानयति। स्वर्गात् परावर्तमानो दुष्यन्तः आश्रमे मिलति शकुन्तलां सपुत्राम्। अङ्गुलीयकदर्शनेन समाप्तऋषिशापो दुष्यन्तः सपुत्रां शकुन्तलां स्वीकृत्य समोदमास्ते इति कथानकं सप्ताङ्केषूपनिबद्धं कविना।

गान्धर्वविवाहविधिः दोषास्पदम्। तपसः सुखमेव चिरन्तनं न च वासनात्मकं प्रेम इति कव्युपदेशः। सुवर्णम् इव प्रेम अपि वियोगाग्निदाहोत्तरमेव प्रभामण्डलायते। जर्मनकविः गेटे, कवीन्द्रो रवीन्द्रः, डी० एल० रायश्च भृशं प्रशंसन्ति अभिज्ञानशाकुन्तलम्[1]।

रसः—कालिदासः शृङ्गारस्य कविः। मानवमनसि समुद्भूतान् समस्तान् भावान् सूक्ष्मेक्षिकया पश्यति वर्णयति च यौवने प्रेमगरलः कथं प्रसरति इति जानाति निपुणम्। ना नारी च प्रेमदीपे शलभायते तत्र न भवति विवेकः सेव्ये सेवके वा। यक्षः स्नेहस्यैव दण्डं भुनक्ति। शकुन्तला च परित्यागमनुभवति। कालिदासस्य शृङ्गारे ब्रह्मचर्यस्य प्रभूतं महत्त्वमस्ति। यथोक्तं कविना—

'अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्॥'

सङ्क्षेपेण कालिदासस्य शृङ्गारवर्णनं करुणवर्णनं च सर्वश्रेष्ठम्। किन्तु वीरवर्णने स सर्वश्रेष्ठतां नाश्रयति। युयुत्सूनां हुङ्कारः, आयुधानां झणत्कारः विकटाक्षरबन्धादयो नाऽत्र विलसन्ति वीररससाधकाः। किन्तु शृङ्गारवर्णने

१. व० उपाध्याय—सुकवि समीक्षा, पृ० ७५। रवीन्द्रनाथ ठाकुर—प्राचीन साहित्य, पृ० ३९।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करुणवर्णने च स लोकोत्तरः। मालविकाग्निमित्रे विषमासु परिस्थितिष्वपि प्रेम-चित्रणं, विक्रमोर्वशीये प्रेमोन्मादः, शाकुन्तले स्नेहसाधना द्रष्टुं शक्यते। वियोग-चित्रणमपि मेघे सीतावियोगे च द्रष्टुं शक्यते। करुणचित्रणमपि अजविलापे रति-विलापे च द्रष्टुं शक्यते। एकत्र पुरुषस्यापरतः स्त्रियाः भावना चित्रिता।

'कुसुमान्यपि गात्रसङ्गमाद् प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः ॥'

—रघु० ८।४४

'रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः।
वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥'

—कुमार० ४।११

वियोगवर्णने कालिदासस्य कारुण्यं बहु वर्धते। कुमारे मेघे च विप्रलम्भ-वर्णनं सहस्रधा दृश्यते। यक्षस्य दुःखकथा मानवमनसः सामान्यानुभूतिरूपा। सः प्रकृतावेव प्रियां पश्यतीति कवेर्वैशिष्टयम्। वियोगे कालातिपातो भवति कठिनः। कालयापनाय कीदृग्यत्नमाचरति यक्षः।

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥'

अलङ्कारः—कालिदासः उपमायाः सम्राट्। समालोचकैरपि स्वीकृतम् 'उपमा कालिदासस्य' इति। उपमाने उपमेये च लिङ्गवचनपुरुषाणामपि साम्यम-त्रैव द्रष्टुं शक्यते। शिष्टाः कवयः सर्वमिदं तथा न विचारयन्ति यथा कालि-दासः। यथा—

'तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या।'

वा

'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्।'

आशादीपे प्रचलति निराशान्धकारः कथमावृणोति जनमनः इत्युपमया कालिदास एव दर्शयति—

'सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समालोचकैरुपमयाऽनया कवेर्नाम अपि भूषितम् । कालिदासः दीपशिखा-कालिदासोऽभवत् । अन्येषामप्यलङ्काराणां दर्शनं भवति कालिदाससाहित्येऽनुप्रासानन्वयार्थान्तरन्यासयमकरूपकादीनां बहुतरं रघुवंशस्य नवमे सर्गे द्रुतविलम्बितेन यमकस्य शोभाऽनिर्वचनीया । यथा—

'यमवतामवतां च धुरिस्थितः' ९।१
'सनगरं नगरन्ध्रकरौजसः' ९।२
'श्रमनुदं मनुदण्डधरान्वयम्' ९।३
'शमरतेऽमरतेजसि पार्थिवे' ९।४

अलङ्कारान्तरमपि द्रष्टुं शक्यते । यथा—

'वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ।'

\+ \+

'सञ्चारिणी पल्लविनी लतेव ।'

\+ \+

'भावस्थिराणि जननान्तरसौहृदानि ।'

छन्दांसि—अनुष्टुब्मन्दाक्रान्ताद्रुतविलम्बितोपजातिमालिनीप्रभृति वृत्तानां प्रयोगे कवेः पाटवं दर्शं दर्शं कस्य मनो न नृत्यति । रघुवंशस्य प्रथमेऽनुष्टुप् शोभा दर्शनीया, कुमारस्य पञ्चमे वंशस्थस्य, चतुर्थे वियोगिनीवृत्तस्य, मेघे मन्दाक्रान्ताया नाटकेषु च कालोचितवृत्तानां शोभा लोकोत्तरा एव ।

लोकशिक्षणम्—साहित्यस्य सर्वोत्कृष्टं लक्ष्यं लोकशिक्षणमेव । कान्तासम्मितोपदेशदानेन लोकोत्तरं वैशिष्ट्यमस्यानुभूतं समालोचकैः लक्षणग्रन्थकारैः विदग्धैश्च । प्रत्येको भारतीसेवकः स्वमत्यनुसारं शिक्षयति किन्तु कालिदासस्य शिक्षणं विशिष्टमेव । पाश्चात्याः समालोचकाः स्विनूवर्नप्रभृतयः कलायाः मूल्यं कलायामेव स्वीकुर्वन्ति । मैथ्यू-आरनोल्डमहोदयास्तु काव्यस्य प्रयोजनं नैतिकं शिक्षणमेव स्वीकुर्वन्ति । आदर्शं दृष्ट्वा जनः स्वीयं जीवनं संशोधयति । कवेरस्य साहित्यं शिक्षयति—देवब्राह्मणयोर्भक्तिं, गुरुवाक्ये श्रद्धां, गोसेवनमतिथिपूजनं लोकरञ्जनं च । सीतायाः लोकपावनं चरित्रं स्त्रीणां कृतेऽनुकरणीयं रामस्य प्रजापालकं चरित्रं च राज्ञां कृते । कविः नृपचरितं दर्शयति—

'स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया सम्मितानाम् ॥'

शरणागतस्य रक्षा करणीया, धीरता एव धनं, मित्रं महान्, प्रेम एव वास्तविकं वस्तु, सुखं दुःखं च सर्वत्र भवति इत्यादयः सहस्रशः लोकशिक्षण-प्रकाराः सन्त्यत्र । दिङ्मात्रमुदाह्रियते—

'क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ।'

\+ +

'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।'

\+ +

'न खलु प्रेम चलं सुहृज्जने ।'

\+ +

'निःशब्दोऽपि प्रदिशति जलं याचितश्चातकेभ्यः ।'

\+ +

'कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा ।'

\+ +

'रिक्तः सर्वो हि भवति लघुः पूर्णता गौरवाय ।'

**प्रकृतिवर्णनम्**—कविः प्रतिपदं पश्यति प्रकृतिम् । सुखे दुःखेऽनुचिते उचिते वा सः प्रकृतिमेव सहचरीं पश्यति । बाह्यप्रकृतिसमानमेव अन्तःप्रकृतिचित्रणे स निपुणः । सः प्रकृतिं जडात्मिकामेव न पश्यति अपि तु प्रतिपलं स्पन्दमानां जीवनशक्तिपूर्णां सहानुभूतिविह्वलाम् । कालिदासः सौम्यप्रकृतिसमुपासकः । तत्-साहित्येऽनुपमाः नायिकाः प्राकृतिकसाधनैः प्रसाध्यन्ते । कोकिला अपि प्रकृत्यभि-मतं सूचयति । वियोगात् पीतपत्राणि पतन्ति । स्नेहान्मृग्योऽपि वासकबलं न गृह्णन्ति । प्रकृतेरुपयोगः स्वसुखाय न क्रियते । प्राकृतिकसौन्दर्यं दृष्ट्वा मनमयूरो नृत्यति । प्रमाणभूताश्चेमाः पङ्क्तयः—

'क्षौमं केनचिदिन्दुपाण्डुतरुणा माङ्गल्यमाविष्कृतम्
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।'

\+ + +

'नाऽऽदत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्
आद्ये वः कुसुमप्रसूतिसमये यस्याः भवत्युत्सवः ॥'

\+ + +

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ।'

\+ \+ \+

'उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥'

विलापेऽपि स प्रकृतिं न त्यजति । मानवानां मनः प्रकृत्या सहैव हसति रोदिति च । सामान्यदशायां प्रकृतिरपि समानैव । यथोक्तम्—

'कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं यदि ।'

\+ \+ \+

'सरसिजमनुविद्धं शैवलेनाऽपि रम्यम्
मलिनमपि हिमांशोर्लक्ष्मलक्ष्मीं तनोति ।'

\+ \+ \+

'आलिङ्ग्यन्ते गुणवति ! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ।'

\+ \+ \+

'सम्पन्नशालिनिचयावृतभूतलानि
स्वस्थस्थितप्रचुरगोकुलशोभितानि ।'

कारणैरेभिरेव समालोचकाः कथयन्ति—

'अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः ।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी ॥'

\+ \+ \+

'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥'

'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः ।
अद्यापि तत्तुल्यकवेरभावात् कनिष्ठिका सार्थवती बभूव ॥'

## ( २५ ) अश्वघोषः

( १९७८ सं० सं० वि० वि० )

**परिचयः**—महायानसम्प्रदायस्यान्यतमसमर्थको बौद्धदार्शनिकोऽसौ अश्वघोषः कस्य न गतोऽस्ति कर्णकुहरं सुरभारतीसेवनसुरभितस्वान्तस्य । १८९३ खिष्टाब्दात् पूर्वमयं दार्शनिकरूपेणैव प्रसिद्ध आसीत् परन्त्वन्वेषकैरन्विष्टं महा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काव्यं नाटकमप्यस्य प्रातःस्मरणीयस्य। भारतीयैश्चीनदेशीयैश्च किंवदन्तीभिर्ज्ञायते यत् कवेरस्य जन्म साकेतेऽभवत्। मातुर्नाम च सुवर्णाक्षी[1]। जन्मना ब्राह्मणः[2]। कालक्रमेण च बौद्धो बभूव[3]।

**समयः**—अस्य समयः प्रथमो ख्रिस्ताब्दः[4]। कालिदासादयं परवर्ती[5] इति बहवः। पूर्ववर्ती इति केचित्[6]। यथाऽयं दर्शनधुरन्धरस्तथैव सङ्गीतधौरेयः कविनिकषश्च। सम्राट् कनिष्कः (७८ ई०) १०० ख्रिष्टाब्दे चतुर्थबौद्धसङ्गीतेरायोजनमकरोत्[7]। यद्वर्णनमश्वघोषसाहित्ये मिलति[8]। इयं सभा जालन्धरेऽभवत्[9]। चतुर्थबौद्धसमितिसभापतेः पार्श्वस्य शिष्यः पूर्णयशः बौद्धधर्मे दीक्षितमकरोदश्वघोषम्। अभिधर्मपिटकस्य महाविभाषानामिकायां टीकायां साहाय्यलाभाय कात्यायनीपुत्रः काबुलेऽश्वघोषमाह्वयत्। ह्वेनच्वांगसाक्ष्ये महाविभाषेयं चतुर्थबौद्धसमितौ[10] च पूरिता। प्रमाणैरेभिः सिद्धयति यत् कविरयं कनिष्कसमये जीवित आसीत्।

**रचना**—महाकवेरस्य महाकाव्यद्वयं प्रकरणमेकं च विवादरहितम्। तच्च—१. बुद्धचरितम्, २. सौन्दरनन्दः, ३. शारिपुत्रप्रकरणञ्च। बुद्धचरितं काम्बेलमहोदयेन १८९३ ख्रिस्ताब्दे इङ्गलैण्डदेशात् प्रकाशितं खण्डितम्। ४०४ ख्रिस्ताब्देऽस्यानुवादो बभूव चीनीभाषायां ८०० ख्रिस्ताब्दे च तिब्बतीभाषायाम्[11]। इत एव[12] जान्स्टनमहोदयेनास्यानुवादो विहितः। अत्र भगवतो बुद्धस्य चरितं वर्णितम्। भाषा सरला शैली च मनोहारिणी। प्राकृतिकवर्णनं

---

१. सौदरनन्द की पुष्पिका—सुवर्णाक्षीपुत्रस्य साकेतस्य……।
२. ३. वा० गैरोला—सं० सा० का इति०, पृ० ७२४ एवं ब० उपाध्याय—सुकवि समीक्षा, पृष्ठ १२१।
४. डा० चाउ सियांग—चीनी बौद्धधर्म का इतिहास, पृ० १००।
५. क्षेमेशचन्द्र चट्टोपाध्याय—डेट आफ कालिदास, पृ० ८२–१०६।
६. भोलाशङ्कर व्यास—संस्कृत कविदर्शन, पृ० ५९।
७. आजकल—बौद्धधर्म के २५०० वर्ष, दिसम्बर १९५६।
८. बुद्धचरित, अध्याय २८।
९. ब० उपाध्याय—सुकवि समीक्षा, पृ० १२१।
१०. वही, पृ० १२२।
११. वही, पृ० १२४।
१२. बिब्लोथिका इण्डिका, पृ० १२६।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सजीवम् । मञ्जुलोऽलङ्कारसन्निवेशः । द्वितीयं महाकाव्यं म० म० हरप्रसाद-शास्त्रिणा कलिकातातः प्रकाशितम् । गौतमस्य लघुभ्रातुः सुन्दरनन्दस्य चरितं वर्णितमत्र सरलभाषायां वैदर्भीशैल्यामुपमारूपकबहुलायाम् । प्रकरणं च एच० लूडर्समहोदयेन बर्लिनस्थानात् प्रकाशितम् । गद्यं पद्यं प्राकृतप्रयोगं भरतवाक्या-दिकं चात्र मिलति ।

सूत्रालङ्कारः, महायानश्रद्धोत्पादसङ्ग्रहः, वज्रसूचिकोपनिषत्, गण्डीस्तोत्र-गाथा चेति अश्वघोषस्यैव रचनासमुदय इति केचित्[1] । सर्वमिदं प्रचारितमीत्सिङ्ग-महोदयेन । कुमारजीवः ४०५ ख्रिस्ताब्दे सूत्रालङ्कारस्यानुवादमकरोत्[2] । लूडर्स-मते कुमारलातस्य कृतिरियम्[3] । महायानश्रद्धोत्पादसङ्ग्रहस्य परमार्थकृतानु-वादो चीनीभाषायां मिलति । ती० सुजुकीमहोदयेन रिचर्डस्महोदयेन चास्य ग्रन्थस्यानुवादो आङ्ग्लभाषायां विहितः[4] । दार्शनिकाः सिद्धान्ताश्चात्र प्रका-शिताः । विण्टरनित्समहोदयानां तकाकुसमहोदयानां मते कस्याप्यन्यस्य जनस्य कृतिरियम् । डा० चाउमतेऽश्वघोषस्यैव कृतिरियम् । फात्सांगमहोदयस्य ता-शांग-चि-हिन-लन-शु नाम्नी टीका मूलग्रन्थादपि श्रेयस्करीति चाउमहोदयस्य विचारः[5] । वज्रसूचिकोपनिषत्तु वेबरमहोदयेन १८०६ ख्रिस्ताब्दे जर्मनीतः प्रकाशिता । लोकमान्यतिलकमते अश्वघोषस्य कृतिरियम्[6] । केषाञ्चिन्मते अश्वघोषस्य केषाञ्चिन्मते च धर्मकीर्तेः कृतिरियं, यत्र वर्णव्यवस्था खण्डिता सप्रमाणम् । गण्डीस्तोत्रगाथाऽभिधं गीतिकाव्यं विण्टरनित्समतेऽश्वघोषकृतं जान्स्टनमते चान्यकृतम् । प्रबोधचन्द्रोदयः अन्यापदेशी नामनी नाट्यरचनेऽपि अश्वघोषकृते इति केचित्[7] । कीथमते गणिकारूपकमिदम्[8] । किन्तु पूर्वोक्त-रचनात्रितयभिन्नं सर्वं संशयारूढमेव ।

---

१. वा० गैरोला—सं० सा० का इति० पृ० ७२४ ।
२. डा० चाउ सियांग—चीनी बौद्ध धर्म का इतिहास, पृ० १०२ ।
३. वा० गैरोला—सं० सा० का इति० पृ० ७२५ ।
४. वही, पृ० ७२५ । व ब० उपाध्याय—सु० समीक्षा, पृ० १२५ ।
५. डा० चाउ—उक्त ग्रन्थ, पृ० ९९ ।
६. गीतारहस्य, पृ० ५६१ ।
७. वा० गैरोला—सं० सा० का इति० पृ० ७२६ ।
८. कीथ—संस्कृतड्रामा, पृ० ८८ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**रसः**—करुणदक्षोऽयं महाकविः। नन्दस्य भिक्षुरूपग्रहणे, सुन्दर्याः विलापे, नन्दानुतापे, यशोधराविलापे, मायारोदने, शुद्धोदनक्रन्दने च करुणस्यैव मन्दाकिनी प्रवहति। को वा न रोदिति सहृदयः श्रुत्वा विलापमेतेषाम्। बुद्धपलायनावसरे शृङ्गारोऽपि दृश्यते। किन्तु करुणस्य साम्राज्यं सर्वातिशायि।

**अलङ्कारादयः**—उपमारूपकादीनां प्रयोगेऽश्वघोषो निपुणः। यथा—

'न गौरवं बुद्धगतं चकर्ष भार्यानुरागः पुनराचकर्ष।
सोऽनिश्चयान्नापि ययौ न तस्थौ तरंस्तरङ्गेष्विव राजहंसः॥'

इत्थमेव—

'प्लवः प्रतिश्रोत इवापगायाः'

\+ \+

'बभौ नतं पद्ममिवोपरिष्टात्।'

स्वाभाविकताऽनुपमताऽनुरूपतानवीनतादयो दृश्यतेऽत्र। प्रकृतेरुपयोगः प्रशंसायोग्यः। लिङ्गसमताऽप्यस्त्येव। चमत्कारिता विलक्षणताऽपि चक्षुगोचरा, नन्दस्य चञ्चला मनोवृत्तिः सुष्ठु दर्शितोपमया। कालिदासस्यानुहरणमिवोपलक्ष्यते। द्वितीयायामपि सा एव भावना भङ्ग्या प्रकटीकृता। उत्प्रेक्षागर्भा तृतीयाऽपि लोकोत्तरं वैशिष्ट्यमावहति।

रूपकस्यापि गतिरीदृशी। नवीनता सर्वत्र चमत्कारकारिणी। यथा—

'भूषावभासे स्वकुलोदितेन स्त्री पद्मिनी नन्ददिवाकरेण।'

अथवा

'अथ धर्मचक्रमृतनाभि धृतमतिसमाधिनेमिमत्।
तत्र विनयनियमारमृषिर्जगतो हिताय परिषद्यवर्तयत्॥'

नवीनता चमत्कारातिशयोऽत्र दर्शनीय नरो नारी च पारस्परिकसम्बन्धेनान्योऽन्यविकासं कुरुतः इति वैद्यकसिद्धान्तोऽपि व्यञ्जितः कविना। धर्मचक्ररूपकोऽपि बौद्धधर्मस्वरूपबोधकः। अर्थान्तरन्यासोत्प्रेक्षानुप्रासादयोऽपि दृश्यन्तेऽश्वघोषसाहित्ये। छन्दांस्यपि सन्ति इन्द्रवज्रोपेन्द्रवज्रोपजातिवंशस्थप्रभृतीनि।

**लोकशिक्षणम्**—सुन्दरीभिर्युक्तिभिः प्रतिपादयत्यश्वघोषोऽनित्यतां देहस्य। सौन्दरनन्दस्य नवमोऽस्ति सर्गः शरीरानित्यत्वप्रतिपादकः। यथा—

'शरीरमामादपि मृन्मयाद् घटादिदं तु निःसारतमं मतं मम।'

\+ \+ \+

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तर्काणामपूर्वता भाषायाः मधुरता चात्र दर्शनीया। यो जयति सङ्ग्रामे रिपून् स न वीरः। यो जयति लोलानि षडिन्द्रियाणि स एव वीरः, देहे तु व्याधिः, ज़रा मृत्युरपि। सुष्ठुरूपेण रक्षितमपि शरीरं नश्यति। वस्तुतो विजये वीरत्वमिन्द्रियाणामेव नाश्वरथगजानाम्—

'यथा मता वीरतरा मनीषिणो जयन्ति लोलानि षडिन्द्रियाणि ये।'

शरीरे सुन्दरता नास्ति। बुद्धेर्भ्रमोऽयम्। समयेन शुद्धेर्विशिष्टसाधनानि नाश्रितानि दोषयुक्तस्थानानि वस्त्रैर्नाच्छादितानि चेत् रूपयुक्तस्यापि शरीरस्य का दशा?

'यदि प्रतीयं वृणुयान्न वाससा न शौचकाले यदि संस्पृशेदपः।
मृजाविशेषं यदि नाददीत वा वपुर्वपुष्मान् वद कीदृशं भवेत्॥'

यौवनस्य चाञ्चल्यं तु सर्वाक्षिसमक्षम्। गतोऽपि ऋतुरायाति, क्षीणोऽपि चन्द्रो वर्धते, किन्तु नदीनां जलं यौवनं च पुनर्नाऽऽयाति। पुनस्त्र का श्रद्धा?

'गतं गतं नैव तु सन्निवर्तते जलं नदीनाञ्च नृणाञ्च यौवनम्।'

नारी दोषाय एव। यथा सविषा लता कष्टाय एव, सर्पाधिष्ठिता गुहा दुःखाय एव, विवृतासिः पीडनाय एव, तथैव नारी अपि व्यसनाय एव। इमाः विचित्रैर्वाक्यैर्नरस्य चित्तं हरन्ति किन्तु हृदये तासां तु क्रूरतैव। पुनस्तत्र सौन्दर्यबुद्धिरस्ति छलमात्रम्। हालाहलपानमुचितं न स्त्रीभुजाबन्धनम्। यथा—

'व्यसनान्ता हि भवन्ति योषितः।'

\+ ÷

मधु तिष्ठति वाचि योषितां हृदये हालाहलं महद्विषम्।

वैराग्यमेव श्रेयसे। न च कामिनीकुचस्पर्शः। व्याघ्रसङ्कटादपवारितो मृगः पुनरेति वागुरां गीतरवेण वञ्चितः। किमिदं मोक्षाय, लाभाय, उताहो निर्वाणाय। सर्वमिदमज्ञानविलासमात्रम्। सिकतातस्तैलं, गगनात् पुष्पं, वन्ध्यातः सुतञ्च कथमपि सम्भवं, न कामिनीतः सुखम्। यथा—

'कृपणं बत यूथलालस्ते महतो व्याधभयाद् विनिःसृतः।
प्रविविक्षति वागुरां मृगश्चपलो गीतरवेण वञ्चितः॥'

संसारः भयङ्करः। यथा पङ्किला नदी गन्तुमशक्या तथैव लोकः। विषयपिपासाप्रशमनाय ग्राहवतीं सरितां यः प्रविशति सः पुनर्नोदेति। सर्पगरलमपवार्यं न पुनर्विषयगरलम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'कलभः करिणा खलूद्धृतो बहुपङ्काद् विषमान्नदीतलात् ।
जलतर्षवशेन तां पुनः सरितां ग्राहवतीं तितीर्षति ॥'

भाषा-शैली—अश्वघोषस्य भाषा सरला शैली च मनोहारिणी । कुत्रापि काठिन्यं नास्ति । सम्प्रेषणीयता च तीव्रा । व्याकरणदोषाः न सन्ति । सिद्धान्त-वर्णनस्थलेऽपि दुरूहता दृष्टिपथं नायाति । समासबाहुल्यमपि नास्ति । यथा—

'यथा हि भीतो निशि तस्करेभ्यो द्वारं प्रियेभ्योऽपि न दातुमिच्छेत् ।
प्राज्ञस्तथा संहरति प्रयोगं समं शुभस्याप्यशुभस्य दोषैः ॥'

अस्य शैली स्पष्टतरा । तत्र नास्ति शब्दाडम्बरः न वा वचनवक्रता । स्वीयं कथ्यं सरलरूपेण समुपस्थापयति कविः । जनसामान्यस्य विश्वासोऽस्ति यत् मरणोत्तरं जनः आनन्दमयलोकं याति । किन्तु सर्वमिदमसत्यमेव । यथा निर्वृतो दीपो नाकाशं याति न वा धरां न वा दिशं विदिशां वा । अपि तु स्नेहक्षयात् तत्रैव शान्तिमेति, तथैव जनोऽपि न याति स्वर्गं न वा नरकं न च पातालम् । क्लेशनाशादत्रैव शान्तिमेति । यथा—

'तथा कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम् ॥'

इत्थं भावभाषाशैलीरसालङ्कारादिदृष्ट्याऽश्वघोषोऽस्ति सर्वोत्कृष्टो बौद्धसंस्कृतसाधकः ।

## ( २६ ) भारवि वा भारवेरर्थगौरवम्

### ( १७७८ )

हरिहर-सोमेश्वर-मल्लिनाथक्षेमेन्द्रादिभिः सूचितो भारविः अर्थगौरवाय संस्कृतसाहित्ये सदा स्मृतिपथमानीयते । कालिदासादिभिः प्रवर्तिता महाकाव्यस्य परम्परा भारवेः किरातार्जुनीये विकसिता दृश्यते । महाकाव्यानामलङ्कृता शैली भारविमहोदयादेव संस्कृतसाहित्ये प्रचलमाना दृश्यते । कालिदासेन प्रवर्तिता बहुनायका काव्यकला तिरोहिता नानुकृता वा कविभिः । किन्तु भारविणा प्रवर्तिताऽलङ्कृता महाकाव्यकला परवर्तिभिर्भृशमनुकृता । स एव मानदण्डो बभूव महाकवीनाम् । माघस्तु काव्यारम्भे वृत्ते रसेऽपि तमेवानुकरोति । श्रीहर्षादिभिः स्वीकृतो बुद्धिविलासोऽपि इत एव प्रचलति ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**जीवनम्**—पुलकेशिनद्वितीयस्य एहोलशिलालेखे भारवेर्नाम मिलति[१]। अस्य समयः ६३४ ख्रिस्ताब्दः ५५६ शकाब्दो[२] वा। अस्य लेखकोऽस्ति रविकीर्तिः। गङ्गनृपतेर्दुर्विनीतस्य शिलालेखे किरातार्जुनीयस्योल्लेखोऽस्ति[३]। अवन्तिसुन्दरीकथानुसारमयं सभासदस्यो विष्णुवर्धनस्य। अयं पुलकेशिनद्वितीयस्यानुजः शशास च महाराष्ट्रप्रदेशान् ६१५ ख्रिस्ताब्दे। अतो ६०० ख्रिस्ताब्दे भारविरासीदिति बलदेवोपाध्यायाः'।[४] अवसदयं षष्ठशताब्द्याः उत्तरार्धे सप्तमशताब्द्याः पूर्वार्धे वेति वाचस्पति गैरोला[५]। भारविरासीत् षष्ठशताब्द्याः उत्तरार्धे इति वेदव्यासशुक्लः[६]।

**जन्मस्थानम्**—भारविरासीद् दाक्षिणात्यः इति कृष्णकुमारोऽवस्थी[७]। त्रावणकोरनिवासी इति एन० सी० चटर्जी[८] वा० गैरोला[९] च। इति बहिःसाक्ष्यम्। 'शिथिलवसुमगाधे मग्नमापत्पयोधौ' (१।४६), 'तत्प्रियार्थमिव यातुमथास्तं भानुमानुपपयोधि ललम्बे' ९।१ प्रभृतिभिः किरातोद्धरणैः प्रो० आर० आर० भागवतमहोदयाः दाक्षिणात्यो कविरिति साधयन्ति। किन्तु कवयः सर्वं दृष्ट्वैव न वर्णयन्तीति आक्षेपो पं० वेदव्यासशुक्लस्य किरातार्जुनीयशिवपुराणयोस्तुलनात्मकाध्ययने ५९ पृष्ठे। उत्तरभारतीयोऽयमिति वक्तुं न शक्यतेऽवन्तिसुन्दरीकथाऽवन्तिसुन्दरीकथासाराभ्यां प्रतिपादिततथ्यसमीक्षणात् प्राक्।

**जीवनम्**—अस्य पितुर्नाम नारायणः। बाल्येऽस्य नाम आसीद् दामोदरः। पश्चात् भारविनाम्ना प्रसिद्धो बभूव। विष्णुवर्धनोऽस्य मित्रम्। मृगयाप्रसङ्गेन कृतमांसभक्षणोऽसौ दुर्विनीतमाजगाम। आर्यया चैकया सम्मानयति स्म सिंहविष्णुम्। त्रयोऽस्य पुत्राः। अन्यतमस्य मनोरथस्यापि चत्वारः पुत्राः। तेष्वन्य-

---

१. कालिदासभारविकीर्तिः।
२. 'पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च।'
३. किरातार्जुनीयपञ्चदशसर्गटीकाकारेण दुर्विनीतनामधेयेन।
४. सुकवि समीक्षा, पृ० १७१।
५. सं० सा० का इति० पृ० ७२९।
६. किरातार्जुनीयशिवपुराणयोस्तुलनात्मकाध्ययनम्, पृ० ५८।
७. किरातार्जुनीयम्—भूमिका पृ० २२-२३।
८. होम आफ भारवि—प्रोसीडिंग्स् आफ ओरियेन्टल कान्फ्रेंस, १९४४।
९. सं० सा० का इति० पृ० ८५३।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमस्य वीरदत्तस्य पुत्रो दण्डी कर्ता काव्यादर्शदशकुमारचरितादिग्रन्थानां[1] सूचयति सर्वमिदम् अवन्तिसुन्दरीकथाऽवन्तिसुन्दरीकथासारश्च। दामोदरो भारविश्च पृथगिति जी० हरिहरशास्त्री। एक एवेति एम० रामकृष्णकविः। ग्रन्थाविमौ विवादबहुलाविति पं० वेदव्यासशुक्लः।

**किंवदन्ती**—( क ) अर्थाभावेन त्रस्ता कविजाया 'सहसा विदधीत न क्रियामि'त्यादिकं २।३० श्लोकं कस्यैचित् श्रेष्ठिपत्न्यै दत्वा धनमवापेति डा० हरिहरदत्त शास्त्री।

( ख ) राज्याश्रयप्राप्तये चलितोऽयं श्रान्तोऽकस्मान्मिलिताय तद्देशनृपाय तदेव श्लोकं कमलपत्राङ्कितं दत्तवानिति आचारियरंमहोदयाः।

( ग ) पितृतिरस्कारेण क्रुद्धः मारणाय गुप्तः कविः पित्रा मात्रे दीयमानं तिरस्कारस्पष्टीकरणं श्रुत्वा भृशं पीडितः पपात पितृचरणयोः पितृघातरूपमानसपातकप्रायश्चित्तं च ज्ञात्वा जनकात् श्वसुरगृहं गत्वा गावश्चारयितुं प्रारभत। कालक्रमेण पत्न्या याचितश्च पूर्वोक्तं श्लोकं निक्षेप्तुमददात्। सा च श्रेष्ठिने दत्वा जग्राह धनमिति बलदेवोपाध्यायाः।

युवकपुत्रेण सह शयाना माता श्लोकप्रभावेण रक्षितेति कथा स्थलत्रये योजिता निजकल्पनया।

**समीक्षणम्**—किंवदन्तीसमीक्षणेनेदं विभाति यत् कवेः प्रसिद्धिः तत्समये एवाभवत्। किन्तु सर्वत्रानुभवविरोधः तर्कविरोधश्च।

**रचना**—किरातार्जुनीयमेव एका प्राप्ता रचना भारवेः। यद्यपि निश्चप्रचमिदं यत् महाकाव्यादस्मात् पूर्वं पश्चाद् वा भारवेर्लेखनी अवरुद्धा नाऽभविष्यत् किन्तु इतोऽधिकं नास्ति किञ्चित् प्राप्तमिह।

**कथावस्तु**—महाकाव्यस्यास्य कथा इतिहासप्रसिद्धा। महाभारतस्य वनपर्वणि शिवपुराणस्य शतरुद्रसंहितायां कथेयं मिलति। सर्गाश्चाष्टाधिकाः अष्टादशसंख्यकाः। मध्यमपाण्डवोऽर्जुनो नायकः। स च धीरोदात्तः। पार्थे सर्वे गुणाः सन्ति। वीरो रसोऽत्र चाङ्गी शृङ्गारादयोऽङ्गभूताः। अर्थगाम्भीर्यं प्रसिद्धमेव। उपमारूपकादिरलङ्कारैः भगवद्वेदव्यासोपदेशात् दीव्यास्त्रप्राप्तिर्वर्णिता। लघ्वी कथा कविप्रतिभया विस्तारिता। महाकाव्यस्य नाम नायकप्रतिनायकनामानुसारमेवास्ति।

---

१. अवन्तिसुन्दरीकथा, अवन्तिसुन्दरीकथासारः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावपक्षः कलापक्षश्च समृद्धिभाजौ। रसप्रयोगे नैपुण्यमस्य प्रशंसनीयमेव। अर्जुनहृदयस्थः स्थायिभावोत्साहो विभावानुभावसञ्चारिसंयोगात् वीररसतामेति। वीररसप्रधाना इयमेका एव रचना संस्कृतसाहित्ये। शृङ्गारवर्णनेऽपि कविः सफल एव। पार्थकिरातभाषणयुद्धावसरे दृश्यते रौद्ररसोऽपि। अस्य संवादाः रुचिराः सन्ति। सूक्ष्मता सम्प्रेषणीयताऽस्य संवादां दृश्या एव। दीर्घता नीरसताऽत्र नास्ति। चरित्रचित्रणं मनोवैज्ञानिकम्। पात्राण्यस्य सजीवितानीव लक्ष्यन्ते। कालिदासापेक्षया भाषाऽस्य कठिना माघभाषापेक्षया च सरला। पञ्चमपञ्चदशसर्गयोः शब्दक्रीडा कल्पते दोषाय। समासपुनरात्तादिकमपि दर्शयति मल्लिनाथः। षट्त्रिंशट्टीकाः कथयन्ति लोकप्रियतामस्य महाकाव्यस्य। भारवेः सुभाषितावली पण्डितमण्डलीरसनाग्रनर्तकी, यथा—'वरं विरोधोऽपि क्षमं महात्मभिः,' 'हितं मनोहारि च दुर्लभं वचः,' 'अहो दुरन्ता बलवद्विरोधिता, 'सुदुर्लभा सर्वमनोरमा गिरः', 'विचित्ररूपाः खलु चित्तवृत्तयः,' 'गुणाः प्रियत्वेऽधिकृता न संस्तवः।'

भारवेः शास्त्रज्ञानं प्रशंसनीयम्। कामशास्त्रस्य प्रत्येका रथ्या परिचिता। यथा—'मनोभुवा तस्य क्षयाभिपाण्डुताम्', 'शंसन्त्यस्मिन् सुरतविशेषं शय्याः', 'यथोत्तरेच्छा हि गुणेषु कामिनः', 'वाम एव सुरतेष्वपि कामः।' सम्पूर्णे काव्ये सुखवर्णनाय समयोऽवसरश्च न मिलति। स्वर्वेश्यावर्णनं सुविस्तृतमरुप्रदेशे लघूपवनोपम्। कवेर्नीतिज्ञानं सुविस्तृतम्। नेदमावश्यकं राज्ञामेव। सर्वेषां जीवनेऽस्त्यावश्यकताऽस्य ग्रन्थोऽयं नीतेराकरः। यथा—

'सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः।'

\+ \+ \+

'स किंसखा साधु न शास्ति योऽधिपं
हिताश्च यः संभृणुते स किंप्रभुः।'

\+ \+ \+

'भवन्ति भव्येषु हि पक्षपाताः।'

कविप्रयुक्तोपमोत्प्रेक्षादिषु तस्य वेदपुराणादिज्ञानमपि दृश्यते। मन्येऽहरहः शास्त्राध्ययनोत्तरस्वारस्यात्मिकेयमभिव्यक्तिः। यथा—

'अविग्रहस्याप्यतुलेन हेतुना', 'नोपमानमस्ति नाप्युपमेयः' 'विरुद्धवेषाभरणस्य कान्तता।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दार्शनिकताऽपि दृश्यतेऽत्र । वेदान्तस्य, योगस्य, कर्मकाण्डस्य, मीमांसायाः, तर्कशास्त्रस्य चापि सिद्धान्ताः प्रतिपादिताऽत्र साहित्यसरण्या । यथा—

'वीतजन्मजरसं परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम् ।'

\+ + +

'आगमादिव तमोपहादितः सम्भवन्ति मतयो भवच्छिदः ।'

\+ + +

'यमनियमकृशीकृतस्थिराङ्गः' इत्यादि ।

व्याकरणादिज्ञानमपि तस्य स्फुटीभवत्यत्र । यथा—'प्रकृतिप्रत्ययोरिवानुबन्धः ।' व्यवहारज्ञानमपि तस्याक्षिपथमायाति । यथा—'उपायनानीव नयन्ति धेनवः ।' 'च्युताधिकाराः सचिवा इवाददे ।' साहित्येऽपि सः स्वीयं मतं सूचयति—

'स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥'

पुनरुक्तिरहितसाकाङ्क्षविशदार्थगाम्भीर्यप्रतिपादकत्वं काव्यत्वमिति ।

प्रकृतिप्रेम अपि तस्याऽभिनन्दनीयम् । सः प्रकृतिपूजकः स्वकथनसमर्थनाय प्रकृतिमेवोपस्थापयति । अष्टमे, नवमे दशमे च सर्गे प्रकृतेरुद्दीपनरूपं सुखमवलोक्यते विशेषेण । आलम्बनरूपमपि प्रकृतिवर्णनं करोति कविः । अलङ्काररूपेणापि प्रकृतिवर्णनमुपलभ्यतेऽत्र । यथा—'नराधिपैर्माल्यमिवास्य शासनम्', 'समाजुहावेव वधूः सुरापगाः ।'

सामाजिकभावनाऽप्यस्य द्रष्टुं शक्या किराते । यथा—'वस्तुमिच्छति निरापदि सर्वः', 'आत्मवर्गहितमिच्छति सर्वः', 'जातिस्वभावैरिव जीवलोकः,' इत्यादिना समाजे प्रतिपलमनुभूयमानमभिव्यज्यमानमवलोक्यमानं भावं ज्ञानं च प्रकटीकरोति ।

संवादाश्चास्य शोभनाः । पक्षोभये यत्कौशलं भवत्यपेक्षितं तत् सर्वं दृश्यतेऽत्र । भावभावेतिहाससाहित्यानुभवतर्ककर्कशताविदृष्ट्या सत्यं वस्तु समुपस्थाप्यतेऽत्र ।

भारवेरर्थगौरवम्—सूक्ष्मवस्तसमालोचनरतैः कथितेयमुक्तिः 'भारवेरर्थगौरवमि'ति । कोऽपि कविः करोति पदयोजनं सुविचार्य्यैव । किन्तु भारविस्तत्र गरीयान् । सुदीर्घाऽर्थसम्पत् सन्निवेशिता कविना स्ववाक्येषु यां दर्शं दर्शं मनो नृत्यति । यथा—'स सन्ततं दर्शयते गतस्मयः' 'दर्शयते' इति प्रयोगः सूक्ष्मतया विवेच्यः । राजनीतिचतुरता स्वाकारगोपनक्षमतायामेवास्ति । दुर्यो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनस्तु करोतीदमेव । सः केवलं दर्शयते न चात्र वास्तविकता । दुर्योधनस्य सर्वं चरित्रं द्योतयति पदमिदमेव । 'नराधिपैर्माल्यमिवास्य शासनम्' इत्यत्रापि दर्शनीयाऽर्थमुक्ता—मालाया ग्रहणं मौनं भवति शिरोनमनपूर्वकं च। जनताऽस्य शासनं, मौनं स्वीकरोति । नात्र प्रतिरोधः औचित्यविमर्शो वा। अरण्ये रोदनं मौर्ख्यायं एव । यदाऽधिकारी विवेकहीनः स्वकष्टज्ञापनेन को लाभः ? अतो मौनमेव वरम् । अथ च मालायाश्चाधिकाधिकं गमनस्थलं कण्ठमस्ति । ततोऽधिकं त्वसम्भवम् । मालाया निष्काशने कियत् सारल्यं भवति ? तन्निर्माणं च पुष्पैर्भवति । पुष्पाणामस्तित्वं परस्परं भिन्नं भवति। तत्सङ्घटकं च सूत्रं भवति । प्रथमं पुष्पाणि सूच्यग्रेण छिद्यन्ते । तदनन्तरं ते मालाकारतां भजन्ते । सुयोधनसभायां ये नृपाः सन्ति तेऽपि तन्निरङ्कुशता-सूच्यग्रेण विद्धाः । शासकशासितसूत्रे चाऽऽबद्धाः । सच्छीलाः समयेन ततः पलायितारो वैरायितारश्च । सर्वमिदमग्रिमांशैः स्पष्टतां याति । यथा—

'सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये' ।
'विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये' ।
'प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव' ।
'अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः' ।
'सुकरः तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि' ।

इत्यादिपङ्क्तिभिः सम्मेलने पूर्वोक्तार्थ एव विजृम्भते । अत एव पूर्वाचार्यैः कथितेयमुक्तिः प्रतिष्ठायां भारवेरर्थगौरवस्य ।

## ( २७ ) भवभूतिः

( १९७८ )

'भवभूतिं सितं लोकं गिरिजा वेत्ति वा विधिः ।
वाग्मी ज्ञानसुसम्पन्नाः क्व कथा यत्र मादृशाम् ॥ ॥'

धनपालेन तिलकमञ्जर्यां, सोड्ढलेन उदयसुन्दर्यां, क्षेमेन्द्रेण च सुवृत्ततिलके मुक्तकण्ठेन प्रशंसितं भवभूतिं को न जानाति संस्कृतसेवकः ? नाटकत्रयकर्ता मानवमनोविकारनिरूपणकर्ता वेदोपनिषत्सांख्ययोगादिमर्मज्ञो भवभूतिरस्ति नाटककारः संस्कृतसाहित्ये ।

**जीवनवृत्तम्**—महावीरचरितप्रस्तावनानुसारं विदर्भस्य पद्मपुरे वास्तव्यः काश्यपगोत्रीयः कृष्णयजुर्वेद-तैत्तिरीयशाखाध्येता भट्टगोपालस्य पौत्रः नील-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्ठस्य पुत्रः जतुकर्णीकुक्षिजः पङ्क्तिपावनः पञ्चानिस्थापकः ज्ञाननिधिशिष्यश्च भवभूतिरासीत्[1]। पूर्वजाश्चास्य सोमयज्ञकर्तारः[2] श्रौतविद्यावेत्तारः काव्यकला-मर्मज्ञाश्च। अस्य नाम श्रीकण्ठ[3] उम्बेक इत्यपि। उम्बेकोऽयं मीमांसकः कुमारिलशिष्यश्च। षड्दर्शनसमुच्चयटीकाकारो गुणरत्नः सूचयति यत् कुमारिलभट्टस्य श्लोकवार्तिकोपरि कृता[4] टीकाऽनेनेति। अत उम्बेक एव भवभूतिरित्यनुमा। श्रीहर्षकृतखण्डनखण्डखाद्यस्य विद्यासागरीटीका विधाता आनन्दतत्त्वशुद्धिविधाता बोधघनाचार्यश्च भेदाभेदनिराकरणप्रकरणे चोम्बेक-सिद्धान्तं लिखतः सिद्धयत्यनेनास्य प्रचण्डदार्शनिकता[5]।

'साम्बा पुनातु भवभूतिपवित्रमूर्तिः।'

अथवा

'तपस्वी कां गतोऽवस्थामिति स्मेराननाविव।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ॥'

इति पद्यानुसारमस्य नाम भवभूतिरभवदिति पारम्परिकाः[6]। शङ्करदिग्वि-जयस्य सप्तमसर्गानुसारं मण्डनस्यैव नाम विश्वरूप उम्बेकश्च दीक्षानन्तरं सुरेश्वराचार्यश्च। याज्ञवल्क्यस्मृत्युपरि विश्वरूपेण बालक्रीडा नामिका टीका कृता। बालक्रीडोपरि च लिखिता विभावनाऽभिधा टीका यतीश्वरवेदात्मना। तत्रैव मिलति श्लोकोऽयं भवभूतिसुरेशविश्वरूपाणामेकत्वसूचकम्—

'भवभूतिसुरेशाख्यं विश्वरूपं प्रणम्य तम्'।[7]

किन्तु सर्वमिदमनुसन्धानसापेक्षम्।

**समयः**—मम्मटः (११०० ई०), धनञ्जयः (१००० ई०), सोमदेवः (१००० ई०), राजशेखरः (९०० ई०), वामनश्च[8] (८०० ई०) भवभूतिना

---

१. ब० उपाध्याय—सुकवि समीक्षा, पृ० ३१८।
२. कीथ—भवभूति एण्ड दी वेद—जे० आर० ए० एस० जुलाई १९१४।
३. उत्तररामचरित की प्रस्तावना।
४. वा० गैरोला—सं० सा० का इति० पृ० ६८६-८७।
५. ब० उपाध्याय—सु० स० में उदधृत, पृ० ३१९-२०।
६. ब० उपाध्याय—सु० स० में उदधृत पृ० ३१९-२०।
७. ब० उपाध्याय—सु० स० में उदधृत पृ० ३२१।
८. पाण्डेय—संस्कृत साहित्य की रूपरेखा, पृ० १५३-१५४।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिचिताः। वाक्पतिराजो भवभूतिश्च यशोवर्मणः कान्यकुब्जाधिपतेः सभापण्डिताविति सूचयति राजतरङ्गिणी कल्हणकृता[1]। ललितादित्यश्च यशोवर्माणमजयत्[2]। घटनेयं ७३६ खिस्ताब्देऽभवदिति स्टीनमहोदयाः[3]। वाक्पतिराजोऽपूर्णे 'गउडवहो' नामके ग्रन्थे प्रशंसयति भवभूतिम्। अतो सिद्धयत्यस्य स्थितिः सप्तमखिस्ताब्दे।[4]

**रचनाः**—अस्य रचनात्रयमवलोक्यते—१. मालतीमाधवः, २. महावीरचरितम् ३. उत्तररामचरितञ्च।

**१. मालतीमाधवः**—बृहत्प्रकरणमिदम्। माधवस्य मालत्या सह विवाहकथाऽत्र वर्णिता विस्तरेण। यौवनस्य उन्मत्तकारिण्याः प्रेमभावनायाश्चित्रणमत्र विशदतया कृतम्। प्रकृतिवर्णनमत्र मनोहरम्। अघोरघण्टसिद्धीनां श्मशानस्य च चित्रणमत्र मिलति।

**२. महावीरचरितम्**—रामस्यैव पूर्वार्धं चरित्रमत्र चित्रितम्। रामावगुणगोपनाय यत्नं करोति कविः। यथा—बालिवधप्रसङ्गे रावणपक्षीयत्वमुद्भावितम्।

**३. उत्तररामचरितम्**—रामस्योत्तरजीवनमत्रोपनिबद्धम्। तृतीयाङ्के कवेः कल्पनाप्रकर्षः काव्यन्यायश्चावलोकनीय एव। करुणावरुणालयोऽत्र विजृम्भते। शिलाऽप्यत्र रोदिति का कथा पुनः सचेतनानां? सर्वैः समीक्षकैः स्वीकृतोऽत्र कारुण्यसन्निवेशः।

**भावपक्षः**—भवभूतिः रससिद्धोऽस्ति कविः। कारुण्यस्य आचार्यः। कालिदासादप्यधिकमत्र कारुण्यम्। भवभूतेः करुणो रसः लोकोत्तरः चमत्कारकलितः निर्दयहृदयेष्वपि कारुण्यप्रवाहकः। यथा—भोजः श्रृङ्गारस्य, शैवाः शान्तस्य मुख्यत्वं साधयन्ति, तथैव कविरयं करुणस्य। यथा—

> 'एको रसः करुण एव निमित्तभेदाद्
> भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
> आवर्तबुद्बुदतरङ्गमयान् विकारा-
> नम्भो यथा सलिलमेव तु तत्समस्तम्॥'

---

१. कल्हण—राजतरङ्गिणी, ४।१४४।

२. कल्हण—राजतरङ्गिणी, ४।३४।

३. डा० स्टीन—ट्रांसलेशन आफ राजतरंगिणी, पृ० ८९।

४. वा० गैरोला—सं० सा० का इति० पृ० ६८६।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिन्दीसाहित्यस्यामरगायकः सुमित्रानन्दनपन्तः सुष्ठु भणति—

'वियोगी होगा पहला कवि आह से उपजा होगा ज्ञान।
निकल कर आँखों से चुपचाप वही होगी कविता अनजान ॥'

वस्तुतः स्वानुभूत एव रसः सहृदयं तर्पयति। भवभूति साहित्ये या करुणा-धारा प्रवहति सा स्वजीवनेऽनुभूता। सः कालिदासवन्नाप सुखं शान्ति सम्मानं स्वजीवने। समानधर्माणमन्विष्यन् जगाम जीवनम्। दुःखपूर्णं जीवनं न केवलं यापयितुं शक्यम्। अत एव नाटचकला सहायिकारूपेण तेनान्विष्टा। यतो हि स वदति—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ये किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते हि मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

नाटचसाहित्ये करुणावतारणे महद्वैशिष्टचं भवभूतेः। रसवर्णनमस्य तलस्पर्शि, मर्मस्पर्शि, वेदनामयं स्वल्पमुखरं कुकूलवद्दीप्यमानञ्च। यथा—कवेर्दुःखं वेदोपनिषदादिसाहित्यधुरन्धरत्वात् प्रकाशनानर्हं तथैव रामस्यापि नृपासनस्थत्वात्। हृदाहे दाहः मस्तिष्के शान्तिः। गाम्भीर्यमेव गोपकम्। सामान्ये जने स्याच्चेत् कारुण्यमीदृशं मनश्शिरश्च द्विधाऽभविष्यत्। यथा—

'अनिर्भिन्नो गभीरत्वात् अन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥'

यथा च—

'हा हा देवि! स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥'

असीमदुःखसागरे मज्जत्यात्मा। दर्शनोत्कण्ठितमपि नेत्रमन्धकारे अवलोकनविरहितम्। मानवस्येयमवशता विचित्रा। भोजनमप्यस्ति बुभुक्षाऽपि, पानीयमप्यस्ति पिपासाऽपि किन्तु ग्रहणे नाधिकारः शीलस्य, लज्जायाः, मानवतायाः, स्वतन्त्रतायाः, सदाशयतायाः, दयायाः निर्वाहकर्ता नाशमेति न च लोकः सुखमेति। सीतां त्यक्त्वा रामः स्वजीवनोपवने कण्टकमारोपयति। किन्तु एतेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजकस्य किं ? भवभूतिरपिवदपमानगरलं परन्तु एतेन तत्कालस्थस्य किं ? वैशिष्ट्येनानेनैव 'उत्तरे रामचरिते भवभूतिर्विशिष्यते ।'

न केवलं करुणे वीरेऽपि तथैव कविरयम् । शब्दध्वनिरेवानुमापयति शस्त्र-सम्पातं वीरगर्जनं जनसम्मर्दश्च । गौडी विलसति वीरे । यथा—

'झणञ्झटितकङ्कणक्वणितकिङ्कीटिकं धनुः ।'

\+ + +

'ज्या जिह्वया वलयितोत्कटकोटिदंष्ट्र ।'

मालतीमाधवे शृङ्गारस्य वर्णनं सुन्दरमस्ति । श्मशानचित्रणे भयानक-मपि । उत्तरे रामचरिते विप्रलम्भोऽपि ।

कलापक्षः—भाषोपरि कवेरधिकारः । समयेन भाषापरिवर्तनं करोति । कोमलचित्रणे समासाभावः कठोरचित्रणे च समासबाहुल्यम् । यथा—

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।।'

यथा च—

'अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ।।'

यथाऽस्य भाषा भावानुसारिणी तथैव शैली अपि । शिखरिणीलेखने प्रभूता सफलताऽवाप्ताऽनेन । यथा च क्षेमेन्द्रः सुवृत्ततिलके—

'भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।
चकिता घन-सन्दर्भे या मयूरीव नृत्यति ।।'

भवभूतिना चेतनमानवीयप्रकृतेरचेतनप्रकृतेरपि चित्रणं कृतं समानरूपेण । स प्रकृतेर्भयङ्करं कोमलं च रूपं चित्रयति समानरूपेण । दण्डकारण्यचित्रणे' श्मशानचित्रणे गिरिनिर्झरवर्णनेऽपि तस्य भारती तथैव पटवी यथा प्रेम्णः करुण-स्य वा । अलङ्कारप्रयोगोऽस्य सुन्दरो नवीनश्च । व्यक्तस्याव्यक्तेन द्रव्यस्य गुणेन साम्यं प्रदर्शयति कविः । यथा—

'परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ।।'

यथा वा—

'किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्लपयति परिपाण्डुक्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥'

प्रथमोदाहरणे मानवीकरणमपि द्रष्टुं शक्यते। कालिदासस्य शकुन्तला वल्कलवसना। भवभूतेः सीता करुणस्य मूर्तिः शरीरधारिणी विरहव्यथा वा। कालिदासो बाह्यमेव रूपं वर्णयति नार्याः भवभूतिस्तु आन्तरिकम्। तत्र नारी पक्वबिम्बाधरोष्ठी अत्र इयं गेहे लक्ष्मीर्नयनयोरमृतवर्ती वा। शब्दप्रयोगेऽपि भवभूतिः सतर्कः। कालिदासो मृगाक्षिपदेनैव चाञ्चल्यं निरूपयति। भवभूतिस्तु 'त्रस्तैकहायनकुरङ्गविलोलदृष्टेः' पदेन। बाल्येऽधिकं चाञ्चल्यं भवति सर्वनेत्रे। भयभीते सति त्वधिकतरम्। रीत्याऽनया भवभूतेश्चित्रणं गभीरं हृद्यावर्जकं च। सर्वमिदं विभाव्यैवोक्तं समालोचनरतैः—

'तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते।'

वा

'परं विभूषा भवभूतिरेव।'

अथवा

'मान्यो जगत्यां भवभूतिरार्यः सारस्वते वर्त्मनि सार्थवाहः।
वाचं पताकामिव यस्य दृष्ट्वा जनः कवीनामनुपृष्ठमेति ॥'

\+ \+

'सा काऽपि सुरभिः शङ्के भवभूतेः सरस्वती।
कर्णेषु लब्धवर्णानां सूते सुखमयीं सुधाम् ॥'

## (२८) सुबन्धुः

(१९७८) (सं० सं० वि० वि०)

अथवा

### कवीनामगलद्दर्पो नूनं वासवदत्तया

'कवीनामगलद्दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥'

इत्यादिना बाणभट्टः, 'सुबन्धुः किल निष्क्रान्तो बिन्दुसारस्य बन्धनात्' इत्यादिना, दण्डी 'सुबन्धुर्विदधे दृष्ट्वा करे वदखञ्जगद्' इत्यादिना हरिहरश्च स्वीकरोति सुबन्धोरभिज्ञताम्। किन्तु न ज्ञायतेऽनेन जन्मकालः माता पिता जन्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थानं वा निपुणम् । पुनरपि प्रयासाः कृताः विद्वद्भिः । तदेव संक्षेपेणोपस्थाप्यते । राघवपाण्डवीये सुबन्धोरुल्लेखः पूर्वं बाणोल्लेखश्चोत्तरम्[1] । वाक्पतिराजस्तु सुबन्धुं[2] स्मरति न च बाणम् । कीथमहोदयस्तु ७०० ख्रिस्ताब्दे स्थापयति सुबन्धुम्[3] । केषाञ्चिन्मतेऽस्य कालः ६२५ ख्रिस्ताब्दोत्तरं ६५० ख्रिस्ताब्दात् प्राक्[4] । पं० बलदेवोपाध्यायः ६०० ख्रिस्ताब्देऽस्य स्थानं निर्धारयति[5] ।

**रचना**—अस्य महोदयस्य एका एव रचना मिलति । तन्नाम च वासवदत्ता । प्रत्यक्षरश्लेषान्वितेयं रचना । बाणोऽपि स्मरति वासवदत्तमिति काणेमहोदयः[6] किन्तु नेयं सुबन्धुकृता । पतञ्जलिकृतेयमिति वरदराजाचार्यः ।[7] अनया परिचितोऽस्ति भवभूतिः,[8] उद्योतकरः धर्मकीर्तिश्च[9] । अस्यां कालिदासस्य वात्स्यायनस्य च सङ्केतोऽस्ति । अनेनानुमीयतेऽस्याश्चोत्तरभाविता । यथा च—

'विफलमेव दुष्यन्तस्य कृते दुर्वाससः शापमनुबभूव शकुन्तला ।
कामसूत्रविन्यास इव मल्लनागघटितकान्तारसम्मोदः ॥'

**कथावस्तुनिरूपणम्**—चिन्तामणिनृपसुतः कन्दर्पकेतुः स्वप्ने विशिष्टसुन्दरीमेकां विलोक्य मकरन्देन सहान्वेष्टुं याति । रात्रौ विन्ध्याचलवृक्षाधःस्थितः सः जानाति यत् पाटलिपुत्रनृपतिसुतया सः स्वप्ने दृष्टः । तमेवान्वेष्टुं च निःसृता तस्याः सारिका तमालिकाभिधा । परस्परमनुरक्तौ शुकदम्पतिसाहाय्येन मिलितौ तौ पलायामासतुः श्रुत्वा वासवदत्तापितुः शृङ्गारशेखरस्य केनाऽपि विद्याधरेण सहोद्वाहभावनाम् । विन्ध्याटवीमागत्य श्रान्तोऽसौ कन्दर्पकेतुः स्वपिति । वासवदत्ता च वनं याति भ्रमणाय । तत्र तामवाप्तुं किरातवर्गयो-

---

१. राघवपाण्डवीय—कविराज १।४१ ।
२. गउडवहो—वाक्पतिराज ८०० ।
३. कीथ—हिस्ट्री आफ संस्कृत लिटरेचर, पृ० ७७ ।
४. पाण्डेय—संस्कृत साहित्य की रूपरेखा ।
५. बलदेव उपाध्याय—संस्कृत साहित्य का इति० पृ० ३८३ ।
६. काणे—कादम्बरी की भूमिका, पृष्ठ १७ ।
७. संस्कृत साहित्य का इति० पृ० १६१ ।
८. मालतीमाधव में ।
९. गैरोला— सं० सा० का इति० पृ० ७९९ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवति युद्धम् । भीता सा ऋषेराश्रमपदं याति । ऋषिशापाच्च शिलारूपमाश्रयति । निद्रापगमे समुत्थितः कन्दर्पकेतुः तामदृष्ट्वाऽऽत्मघाताय यतते । विरमति चाकाशवाण्या । तेनान्विष्टा स्पृष्टा च सा मानवी भवति । मकरन्दोऽप्यायाति तत्रैव । ससुखं तौ राजधानीमागत्य जीवनं यापयतः ।

**समीक्षा**—कथेयं वासवदत्तोदयनकथया भिन्ना । लोककथानकमेवात्र संगृहीतं कविना । यद्यपीयं कथा स्वल्पाऽचेतना च तथापि कविप्रतिभाविलासोऽत्र द्रष्टुं शक्यते । कथानकस्याचारुता वर्णनकौशलेनाच्छादिता । कौशलमेव सुबन्धुकीर्तिनिमित्तम् ।

कविरयं निष्णातः नानाविद्यासु । यथा—न्याये, मीमांसायां बौद्धदर्शने च । रामायणं महाभारतं च जानाति निपुणम् । सुबन्धोः निश्चप्रचं मतमस्ति यत् तदेव सत्काव्यं यत्रालङ्कारचमत्कारः श्लेषप्राचुर्यं वक्रोक्तिवैशिष्ट्यं च । यथोक्तम्—

'सुश्लेषवक्रघटनापटु सत्काव्यविरचनमिव ।'

भावनयाऽनया प्रेरितः सः प्रतिज्ञां करोति 'प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासवैदग्धनिधि'—निर्माणस्य । स्वीये गद्यकाव्ये च स करोति निर्वाहं स्वप्रतिज्ञायाः निपुणम् । सभङ्गाभङ्गश्लेषे वैदुष्यमस्य सर्वाक्षिगोचरम् । यथा—

नन्दगोप इव यशोदयान्वितः, जरासन्ध इव घटितसन्धिविग्रहः, भार्गव इव सदानभोगः, दशरथ इव सुमित्रोपेतः सुमन्त्राधिष्ठितश्च ।

काव्येऽस्मिन् दृश्यन्तेऽलङ्काराः उपमोत्प्रेक्षाविरोधादयोऽपि । परं सर्वत्र श्लेष एव चमत्कारकारणम् । यथा—वासवदत्तारूपवर्णनप्रसङ्गे 'तेन रक्तं रागात्' ४।२ इत्यष्टाध्यायीसूत्रमाश्रित्य नायिकायाः रक्तपादता निरूपिता, प्रकाशशीलताकारणं चोपस्थापितमुद्योतकरनामकाचार्यनिरूपितस्वरूपत्वम् । श्लोकेषु श्लेषस्य चमत्कारिता प्रशस्यतरा । यथाऽत्र—

'विषधरोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥'

उपमाऽपि क्वचित् गुणावहा श्लेषव्यतिरिक्ता । यथा श्लोकेऽस्मिन्—

'अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ॥"

गद्यमपि क्वचिदभिव्यञ्जनाबहुलम् । यथाऽत्र विरहप्रसङ्गे—'त्वत्कृते यानया यातनाऽनुभूता सा यदि नभः पत्रायते सागरो मेलानन्दायते ब्रह्मा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिपिकरायते भुजगपतिर्वा कथकायते तदा किमपि कथमप्यनेकैर्युगसहस्रैरभि-लिख्यते कथ्यते वा ।'

प्रकृतिचित्रणमपि मधुरं सहृदयहृदयाह्लादकं श्लेषप्रपञ्चविरहितं मनोरञ्जकं च । यथा च प्रभातवर्णनादिकम् । संक्षेपेणेदं वक्तुं शक्यते यत् सुबन्धोः कलापक्षमुत्कृष्टम् । भावपक्षचित्रणे तेन सा सफलता नाधिगता या बाणेन वा कालिदासेन । दुरूहताऽपि दृश्यते कलापक्षेऽस्य । अप्रसिद्धानामप्रयुक्तानां बाहुल्या-दत्र काठिन्यमनुभवन्ति विद्वान्सोऽपि । कुत्रचित्तु प्रतिपदं कोशस्यावश्यकता-ऽनुभूयते ।

सर्वोपरि वासवदत्ता विचित्रमार्गस्योदाहरणभूता । सुबन्धोः कीर्तिप्रासादोऽयं चाकचिक्यबहुलः सर्वाभरणभूषितश्च । सर्वमिदमालोच्यैव बाणेनोक्तम्—

'कवीनामगलद्दर्पो नूनं वासवदत्तया ।'

## ( २९ ) बाणः

अथवा ( स० सं० वि० वि० ७९ )

## बाणभट्टः

अथवा ( सं० सं० वि० वि० ८३ )

## पञ्चबाणस्तु बाणः

अथवा

## कादम्बरी

अथवा

## वाणी बाणो बभूवेति

अथवा

## बाणं तु सर्वेश्वरमानतोऽस्मि

**जीवनम्**—आसीत् प्रीतिकूटनामिका नगरी शोणनदोपकण्ठम् । तत्रैवावसत् कुबेरः वात्स्यायनगोत्रीयः । तत्पुत्रेषु पशुपतिः कनीयान् । ततोऽर्थपतिस्ततश्चित्र-भानुः । ततश्च बाणः । कुलेऽस्मिन् शारदाऽवसत् बहुकालम्[1] । सारिकाऽपि श्रुतिपण्डिता यत्र । लक्ष्मीलास्यमपि ददर्श तत्रत्यो जनः । पालकाभावात् बाणो

१. यजूंषि सामानि च यस्य शङ्किताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बभूव ईश्वरः। कृष्णमाध्यमेन च हर्षपरिषदमाजगाम। विद्वत्तामालक्ष्य श्रीहर्षस्तं सभाजयति स्म। सर्वमिदं ज्ञायते हर्षचरितमाध्यमेन।

बाणभट्टमयूरौ जामातृश्वसुराविति केचित्[1]। मयूरस्य रचनाऽस्ति सूर्यशतकं बाणस्य च चण्डीशतकम्। भक्तामरस्तोत्रकर्ता मानतुङ्गः, भट्टिकाव्यविधाता भट्टिस्वामी भट्टिर्वा, गौतमो न्यायसूत्रवार्तिकरचयिता उद्योतकरश्चापि बभूव शतकेऽस्मिन्निति विद्वान्सः[2]। हर्षवर्धनराज्याभिषेककालः ६०६ ख्रिस्ताब्दः[3], तन्निधनकालश्च ६४८ ख्रिस्ताब्दः स्वीकृतः इतिहासकारैः। बाणः शशाङ्कस्य विजयं न वर्णयति वा हर्षदेवस्य पराजयम्[4]। ६३० ख्रिस्ताब्दोत्तरं हर्षपरिषदि सभाजितः युवान्च्वाङ्गोऽपि बाणस्योल्लेखं न करोति। अनेनानुमीयते यत् ६२० ख्रिस्ताब्दपूर्वमेव बाणः पञ्चत्वं जगाम वा हर्षदेवधार्मिकनीतिक्षुब्धस्तत्याज राज्याश्रयम्[5]। काव्यालङ्कारसूत्रे वामनोल्लेखादपि भवत्यनुमानमिदमेव[6]।

**गुरुः**—अस्य गुरुः कश्चिद् भर्वुनामा महायशाः[7]। अयं मौखरिराज्ञामपि पूज्य आसीत्। मौखरिशासकानां कालः षष्ठशताब्द्या उत्तरार्धमिति इतिहासकाराः।

**रचना**—प्राप्यतेऽस्य रचना चतुष्टयम्। १. चण्डीशतकम्, २. हर्षचरितम्, ३. कादम्बरी, ४. पार्वतीपरिणयश्च। जैनविद्वान् चन्द्रपालः तथा गुणविजयगणिः नलचम्पोः टीकायां समुल्लिखतः बाणकृतमुकुटताडितकस्यैकं श्लोकम्। येनानुमीयते यत् मुकुटताडितकनामिकाऽऽसीदस्य काचिद् रचनेति। परं न समर्थ्यंते प्रमाणान्तरैः। औचित्यविचारचर्चायां क्षेमेन्द्रेण सङ्केतितात् पद्यात् ज्ञायते यत् काचित् पद्यमयी कादम्बरीकथा अपि आसीत्। प्रमाणान्तराभावादेतदपि संशयारूढमेव। स्रग्धरावृत्तेषु लिखितमोजोभूयिष्ठं चण्डीशतकमपि शापोद्धारकं

---

१. बलदेव उपाध्याय—सुकवि समीक्षा, पृ० २६६।

२. वही, पृ० २६७।

३. पीटर्सन—कादम्बरी की अंग्रेजी भूमिका व स्मिथ—अर्ली हिस्ट्री आफ इण्डिया, अध्याय १३।

४. कादम्बरी—महाश्वेतावृत्तान्त, वि० ना० त्रिपाठी एवं सनाढ्य पृ० ११।

५. वही, पृ० १२।

६. बलदेव उपाध्याय—सुकवि समीक्षा, पृ० २६७।

७. कादम्बरी—मङ्गलश्लोक ४।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रन्थरत्नमन्यस्य[1]। हर्षचरितं चोच्छ्वासाष्टकम्। आश्रयदातुर्वर्णनमिदम्। ओजोबाहुल्यं दीर्घसमासत्वं कविपरिचयपेशलमत्र वर्तते। कादम्बरी च बाणस्य कीर्तिवैजयन्ती। खण्डद्वयमत्र। पूर्वार्धम् उत्तरार्धञ्च। पूर्वार्धं बाणकृतमुत्तरार्धञ्च तत्पुत्रपुलिन्दभट्टकृतम्। कालमागतं दृष्ट्वा ग्रन्थं चापूर्णं कविः स्वपुत्राणां प्रतिभानिर्णयाय तान् सम्मुखस्थशुष्कवृक्षवर्णनायादिदेश। एकस्य परुषाक्षरमुत्तरं श्रुत्वाऽपरस्य च मुग्धाक्षरं कविस्तस्मै समर्पितवान् कथापूरणभरम्।

विदुषां विचारः—धनपालः तिलकमञ्जर्यां बाणं सूत्ररूपेण निरूपयन् वदति—

'केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्।
किं पुनः क्लृप्तसन्धानः पुलिन्ध्रकृतसन्निधिः॥'

गोवर्धनमते तु बाणो वाग्देव्या अवतारः। यथा प्रागल्भ्यमाप्तुं शिखण्डिनी शिखण्डी जाता तथैव वाणी बाणस्य स्वीचकार—

'जाता शिखण्डिनी प्राग् यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति॥'

श्रीचन्द्रदेवमते बाणस्तु पञ्चाननः। यथा—

\+ \+. \+

'आः सर्वत्र गभीरधीरकविताविन्ध्याटवी चातुरी-
सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥'

बाणः वागीश्वरः, अर्थेश्वरः रसेश्वरश्चेति केचन। यथा—

'वागीश्वरं हन्त भजेऽभिनन्दमर्थेश्वरं वाक्पतिराजमीडे।
रसेश्वरं स्तौमि च कालिदासं बाणं तु सर्वेश्वरमानतोऽस्मि॥'

समीक्षणम्—इत्थं बहुभिः सूत्ररूपेण प्रशंसितोऽयं कविः। तदेव किञ्चित् स्फुटतरं प्रतीयते। कादम्बर्यामस्ति कथाद्वयम्। एका मुख्या अपरा सहायिका गौणी वा। तयोर्नायकनायिके पृथक्। प्रकटीरूपेण पत्रलेखा कथानकमपि। मुखाद्याः पञ्चसन्धयोऽप्यत्र। नास्ति प्रतिनायकः, खलनायको वा। शृङ्गारोऽत्र अङ्गी। नायकश्च धीरोदात्तः। अत्रत्यं प्रेम नोच्छृङ्खलं न वा परकीया विषयम्। स्नेहेऽस्मिन् दशकुमारचरितवत् धूर्तता नास्ति। अभिज्ञानशाकुन्तलवद् नास्त्युन्मादबहुलम्। महाश्वेतापुण्डरीकप्रेमचित्रणेऽस्ति चावेगबाहुल्यम्। काद-

१. वि० ना० त्रिपाठी एवं सनाढ्य—कादम्बरी-महाश्वेता, पृ० १४–१५।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्बरीचन्द्रापीडप्रेमचित्रणे च मर्यादातिशयः। बाणोऽस्त्यपरस्य प्रशंसकर्ता न तु प्रथमस्य निन्दकः।

भावपक्षः—मानवहृदये स्फुरद्भावराशिचित्रणे एव कवेः साफल्यम्। प्रेमा-लापस्य, करुणालापस्य, भयस्य विस्मयस्य च चित्रणे बाणोऽप्रतिमः। मनसि उत्पत्स्यमानान् भावान् सः सङ्केतेन वर्णयति। 'बाणोच्छिष्टं जगत् सर्वमि'ति वदद्भिः केवलं शब्दाडम्बरत्वमेवोपकल्पितम्। परमिदं बाह्यपरीक्षणमात्रम्। अन्तरङ्गपरीक्षणे कृते बाणस्य रचनानैपुण्यं दर्शं दर्शं मनो मोमुद्यते।

कलापक्षः—अलङ्कारवर्णने बाणो विशिष्टः। श्लेष-परिसंख्या-रूपकादय उपमोत्प्रेक्षादिपेशलाः दृश्यन्ते सर्वत्र। प्रकृतिवर्णनेऽपि कविः कुशलः। सरो-वराणां, वनानां, पुराणां, मार्गाणां, दिव्यप्रकृतेः, मानवप्रकृतेः, पशुप्रकृतेर्वर्णने बाणस्योपमानं नास्ति। यथा शृङ्गारकरुणभयानकादीनामद्भुतसहिता वर्णने कविर्दक्षः, तथैव प्रतिपलपरिवर्तनशीलमानवमनसश्चित्रणेऽपि। महाश्वेतावर्णने यथा करुणविप्रलम्भः प्रकाशमेति तथा मानवमनसः यथार्थप्रवृत्तिः। चन्द्रापीड-कादम्बरीवर्णने यथा शृङ्गारप्रस्फोटः तथैव संयमभावना गुरोराज्ञापालनप्रवृत्तिः तथैव च बाणस्य कलागतं नैपुण्यम्। शुकनासोपदेशे जीवनानुभवः कपिञ्जलोक्तौ मित्रनिवारणेच्छा पुण्डरीकप्रवृत्तौ उद्दामकामप्रसरः निपुणं द्रष्टुं शक्यते।

चरित्रचित्रणम्—बाणस्य प्रत्येकं चरित्रं सुनियोजितम्। नायके साहसः, प्रतापः, सर्वविद्यास्थितिः, नीतिकुशलता, धार्मिकता पितृभक्तिः, प्रजावत्सलतादयो गुणाश्चित्रिताः। कादम्बर्यामुदारता, पतिभक्तिः, स्नेहशीलता सुहृत्प्रीतिः, सर्व-सम्मानभावनादयो गुणाः प्रदर्शिताः। महाश्वेता लज्जायाः प्रतिमूर्तिः स्नेहैकरसा कादम्बर्याः मित्रं नायकनायिकाग्रथनपटीयसी। कपिञ्जले सामाजिकमूल्यं प्रति प्रेम ब्रह्मचर्यं प्रति निष्ठाऽनुचितं प्रत्याक्रोशः, मित्ररक्षणचिन्ता दुराचारविद्वेषिता प्रस्फोटिता। शुके जन्मान्तरज्ञानोपलब्धिः कृतागसपरिष्कारः। एवमेव सर्वत्र विज्ञैरूह्यम्।

भाषा—बाणस्य भाषा ललितपदविन्यासा। शब्दार्थयोः गुम्फश्च समानः। यथोक्तम्—

'शब्दार्थयोः समो गुम्फः पाञ्चालीरीतिरिष्यते।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि॥'

वर्णनप्रधानस्थलेषु दीर्घसमासाः दृश्यन्ते भावप्रधानस्थलेषु च प्रायः समासा-भावः। यथा—विदिशावर्णने महाश्वेतोपक्रमे उज्जयिनीवर्णने च दीर्घसमासाः।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुकनाशोपदेशे महाश्वेतावर्णनोपसंहारे श्लेषादावपि च दीर्घसमासाभावः। विरहेषु च कोमलवर्णता विन्ध्याटव्यादौ विकटाक्षरता दृश्यते। शब्दसम्पद्विपुलाऽर्थेषु नवीनता।

शैली—बाणः स्वशैल्याः जन्मदाता। न च तेनोररीकृता कस्यापि शैली पूर्ववर्तिनः। यथा भाषोपरि वर्ततेऽस्याधिकारः तथैव शैल्यामपि। सुबन्धुप्रियोऽत्र श्लेषः परिदृश्यते 'न च प्रत्यक्षरतामाश्रयति। रसवत्ताऽधिका। पिष्टपेषणं नास्ति। कमपि भावं विषयं न पुनराश्रयति। वस्तुनिरीक्षणप्रकारोऽभिनवः। चरित्रचित्रणप्रवृत्तिश्चापि तथैव।

पाण्डित्यम्—लोकोत्तरमस्य पाण्डित्यम्। शास्त्राध्ययनं प्रकाशते पदे पदे। क्वचिदलङ्कारमाध्यमेन क्वचिद्वर्णविन्यासमाध्यमेन। लोकवेदयोः समन्वयोऽत्र मञ्जुलः। वेदज्ञानस्य लोकोन्मुखतां दर्शयति कविः कौशलेन। मानवहृदये स्फुरणशीलान् भावान् निपुणं पठति चित्रयति च बाणः। उक्तं हि धर्मदासेन निपुणम्—

'रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥'

इत्थं बाणेऽर्थेश्वरतां वागीश्वरत्वं रसेश्वरत्वं चावलोक्यैव समीक्षकैरुक्तं 'बाणं तु सर्वेश्वरमानतोऽस्मी'ति।

## ( ३० ) दण्डी

( स० सं० वि० वि० ७९ )

अथवा

## दण्डिनः पदलालित्यम्

अथवा

## कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः

जीवनम्—कवेः पितुर्नाम वीरदत्तः मातुश्च गौरी इति ज्ञायतेऽवन्तिसुन्दरीकथया। बाल्ये एव पितरौ मृतौ। अवसदयं निराश्रयः काञ्चीनगरे। समागते विप्लवे जगाम जङ्गलम्। शान्तिकाले चागते पल्लवनृपतिसभामाजगाम। तत्रैव च जीवनं यापयामास। केषाञ्चिद्विदुषां मतेऽस्य प्रपितामहः भारविः किरातार्जुनीयमहाकाव्यरचयिता। केषाञ्चिन्मते च दामोदरोऽस्य प्रपितामहः। द्वापरस्यास्य कारणमस्ति अवन्तिसुन्दरीकथासारस्येमाः पङ्क्तयः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'तस्यां नारायणस्वामी नाम्ना नारायणोदरात् ।
दामोदर इति श्रीमान् आदिका······वाभवत् ॥
स मेधावी कविर्विद्वान् भारविः (भारवि) प्रभवं गिराम् ।
अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने ॥'

एम० रङ्गाचार्यप्रस्तुतया किंवदन्त्या ज्ञायते यदनेन कृता काव्यादर्शरचना पल्लवनृपसुतशिक्षणायेति बलदेवोपाध्यायः संस्कृतसाहित्येतिहासे ४०० पृष्ठे । समर्थयति च तरुणवाचस्पतिः काव्यादर्शस्य प्राचीनष्टीकाकारः निम्नपङ्क्तिद्वयेन—

'नासिक्यमध्या परितश्चतुर्वर्णविभूषिता ।
अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥'

कालः—सिय-वस-लकर-नामकसिङ्हलभाषाग्रन्थस्य रचना काव्यादर्शाधारोपरि कृतेति सूचयति वार्नेटमहोदयः[1] । महावंशानुसारमस्य रचनाकारस्य राजसेनप्रथमस्य कालोऽस्ति ८४६–६६ खिष्टाब्दः । अस्मात् प्राक् एव दण्डिनः कालो भविष्यति । कविराजमार्गनामककन्नड़भाषाग्रन्थस्य रचनाऽपि काव्यादर्शप्रभाविता । अस्य लेखकस्यामोघवर्षस्य कालोऽस्ति ८१५ खिष्टाब्दः[2] । अतोऽस्मात् प्रागेव दण्डिनः कालो निर्णेतव्यः । काव्यादर्शे दण्डिना सङ्केतितमुदाहरणरूपेण 'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति' इति कालिदासीयं पद्यं लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वच इति वदता । दृष्टिरोधकरं यूनां यौवनप्रभवं तमः इति वदन् दण्डी बाणस्य शुकनाशोपदेशमनुकरोति । अनेनानुमीयतेऽस्य कालः ७५० खिष्टाब्दात् पश्चात् । भङ्ग्यन्तरेण स्वीकरोतीदमेव प्रो० पाठकः[3], बलदेवोपाध्यायः[4], आर० नरसिंहाचार्यः[5], डा० बेलवल्करश्च[6] गैरोला षष्ठशताब्द्यां स्वीकरोत्यस्य कालः[7] ।

---

1. वार्नेट—जर्नेल आफ द रायल एशियाटिक सोसाइटी, १९०५ ।
2. बलदेव उपाध्यायः—संस्कृत साहित्य का इतिहास, पृष्ठ ४०१ ।
3. इण्डिन एण्टीक्वेरी १९१२ ई० ।
4. संस्कृत साहित्य का इतिहास, पृ० ४०१ ।
5. इण्डियन एण्टीक्वेरी १९१२ ई० ।
6. काव्यादर्श, द्वितीय परिच्छेद पर टिप्पणी ।
7. संस्कृत साहित्य का इतिहास, पृ० ८१५ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**रचना**—राजशेखरः सूचयति प्रबन्धत्रयं दण्डिनः। 'त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विस्तृता' इति वदन्। तत्र प्रथमस्तावत् काव्यादर्शः।

१. **काव्यादर्शः**—अत्र चत्वारः परिच्छेदाः सन्ति, येषु ६६० श्लोकाः लिखिताः। तत्र प्रथमे काव्यलक्षणं द्वितीयेऽलङ्काराणां लक्षणोदाहरणानि, तृतीये यमकविमर्शः, चतुर्थे दोषविमर्शश्च। अयमभिनवमलङ्कारत्रयं स्वीकरोति। काव्यादर्शोपरि टीकात्रयमवलोक्यते। १. तरुणवाचस्पतिव्याख्या। २. हृदयङ्गमा-व्याख्या। ३. नृसिंहदेवस्य कुसुमप्रतिभा। ग्रन्थोऽयमाचार्यत्वाय कल्पते।

२. **दशकुमारचरितम्**—अत्र द्वे पीठिके पूर्वोत्तरनामिके। भूमिकाभागरूपः पञ्चम उच्छ्वासः पूर्वपीठिका नाम्ना ज्ञायते। शिष्टमुत्तरपीठिकारूपम्। वस्तुत अष्टावेव कुमारा वर्णिता अत्र। पूर्वापरसमायोजनेन दशत्वसार्थकता।

३. **अवन्तिसुन्दरीकथा, अवन्तिसुन्दरीकथासारः**—अप्पयदीक्षितेन नामसंग्रहमालायां लिखितमस्ति 'इत्यवन्तिसुन्दरीये दण्डिप्रयोगात्'। सिद्ध्यत्यनेन ग्रन्थस्यास्य दण्डिकर्तृत्वम्। केषाञ्चिन्मते दशकुमारचरितं १७०१ खिष्टाब्द-विरचितम्[1]। अवन्तिसुन्दरीकथाऽपूर्णा। कथासारस्तु कथायाः पद्यानुवादः[2]।

**विशेषः**—४. **द्विसन्धानकाव्यम्**—भोजराजः स्वीये शृङ्गारप्रकाशे सूचयति दण्डिकृतं द्विसन्धानकाव्यं सप्तमेऽष्टमे च प्रकाशे। श्लेषेणात्र रामायणमहाभारतकथानकमुपनिबद्धम्।

**भाषा**—भाषाऽस्य कवेः समासबहुला। पदप्रयोगश्च व्याकरणसम्मतः। नावलोक्यतेऽत्र सुविदिता सुबन्धोरिव श्लेषबहुलता न वा बाणस्य दीर्घसमासता। उभयोरपि नास्ति समन्वयोऽत्र आवश्यकतानुसारमस्य भाषा परिवर्तते। यथा—

'रज्जुरियम् उद्बन्धनाय सत्यवादितायाः विषमियं जीवितहरणाय माहात्म्यस्य...... ।'

( अवन्तिसुन्दरीकथा )

यथा वा

'अमृतमयी वचसि प्रसादमयी मनसि, चक्रवाकमयी पयोधरयोः......'।

( दशकुमारचरिते )

**शैली**—प्रवाहः परिदृश्यतेऽत्र। अर्थस्य स्पष्टता रसस्य सुन्दराभिव्यक्तिः सततमवलोक्यते। दैनन्दिनसंस्कृतप्रयोगकारकाणामुपयोगाय दण्डिनः शैली कल्पवृक्षायते। लोकोक्तिप्रयोगे धुरन्धरोऽयम्। अनेनास्य शैली मनोहारिणी

---

१. बलदेव उपाध्याय—संस्कृत साहित्य का इतिहास, पृ० ४०२।
२. ,, ,, —सुकवि समीक्षा, पृ० २९३।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाता। यथा अभवदीयं हि नैव किञ्चित् मत्सम्बद्धं वा जीवितं हि नाम जन्मवतां चतुःपञ्चाप्यहानि। अनेनैव कारणेन दण्डी एव मात्रा सरस्वत्यापि कविरूपेण स्वीकृतः 'कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः' इत्युक्त्वा। समीक्षका अपि कथयन्ति—

'जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥'

**रसः**—रसप्रयोगोऽप्यस्य प्रशंसायोग्यः। तपस्विदम्भस्य, ब्राह्मणकपटस्य, वेश्याछलस्य, पतिव्रतायाः पतिवञ्चनारतक्रूराया वर्णने एव नाग्रिगता सफलता दण्डिना अद्भुतरसवर्णने भयानकचित्रणेऽपि तथैव सफलताऽवाप्ता। क्वचिद् विस्मयः, क्वचिद्विषादः क्वचिदुल्लासश्च समुल्लसति। हिंसकानां चीत्कारो यथा दुनोति मानसं तथैव भग्नपोतस्य काष्ठफलकसन्तरणरतस्य जीवनसंशयोऽपि। दशकुमारे यथार्थस्य चित्रणमस्ति मनोहरं सजीवं च। अलङ्कारबाहुल्यं नास्त्यत्र।

**पाण्डित्यम्**—राजनीतेः, कामशास्त्रस्य, व्याकरणस्य साहित्यस्य च पाण्डित्यं दण्डिनः साहित्येऽवलोक्यते एव। चौरशास्त्रमपि स जानाति। मृच्छकटिककविरिवायमपि। यथार्थचित्रणपटुः कथामाध्यमेन स स्वकालोद्भूतसमाजस्य वास्तविकं चित्रं प्रस्तौति। शैवबौद्धजैनलोकपरम्पराणामपि चित्रणं करोति कविः।

**पदलालित्यम्**—अयं पदलालित्यस्याचार्यः। यादृशी पदललितता वर्ततेऽत्र न तादृशी संस्कृतसाहित्ये निखिले द्रष्टुं शक्यते। अर्थस्य शब्दस्य च मनोहरतां विलोक्यैव सुधीभिरुक्तम्—

'उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥'

लालित्यमस्य दर्शं दर्शं मनो मुह्यति। यथा—

'कामस्तु विषयासक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः।'

अथवा

'हेमन्तवृत्तिरिव प्रालम्बिनी हारमालिनी शिशिरश्रीरिव नवनवमालिका वसन्तवेलेव चारुभुजवासभूषिततनुलता सर्वर्तुसवृत्तितयैव नन्दनस्वभावा······ देवी वसुमती······।'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा

'देव ! दीयतामनुग्रहहृदंञ्च चित्तम्, अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी ।'

## ( ३१ ) राजशेखरः

अथवा ( सं० सं० वि० वि० ७८, ८३ )

## स वर्तते सम्प्रति राजशेखरः

अथवा

## यायावरकवेर्वाचो मुनीनामिव वृत्तयः

अथवा

## काव्यमीमांसा

अथवा

## कर्पूरमञ्जरी, विद्धशालभञ्जिका

अथवा

## बालरामायणम्, बालभारतम्

जीवनम्—अस्य पितुर्नाम दर्दुकः मातुश्च शीलवती पत्न्याश्च अवन्तिसुन्दरी । इयं चौहानवंशीया परमविदुषी क्षत्रिया । अस्याः रचना तु न मिलति किन्तु यायावरेणैव काव्यमीमांसायां पाकविषये मतमुद्धृतम् । न केवलं संस्कृतमेवासीदस्या प्रिया भाषा अपितु प्राकृतमपि । हेमचन्द्रेण देशीनाममालायामनया कृतः, देशीशब्दकोष इति सूचितम् । अकालजलदस्य कविवरस्यायं प्रपौत्रः । सम्भवतः विदर्भे जन्म अलभत । महेन्द्रपालोऽस्य आश्रयदाता यदादेशादभिनीतं बालरामायणं कविप्रणीतम् । कदाचिदाश्रयति स्म लाटेश्वरं यस्याध्यक्ष्ये विद्धशालभञ्जिकाऽभिनीता । पुनश्च महेन्द्रपालसुतं महीपालमाजगाम यत्र बालभारतमभिनीतम् । प्रमाणैरेभिरनुमीयतेऽस्य कालः ८८० ख्रिष्टाब्दतः ९२० ख्रिष्टाब्दं[1] यावत् ।

१. बलदेव उपाध्याय—संस्कृत साहित्य का इतिहास, पृ० ५९०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**पाण्डित्यम्**—पाण्डित्यमस्य लोकोत्तरम् । स आत्मानं वाल्मीकेः, भर्तृमेण्ठस्य भवभूतेश्चावतारं मनुते । यथोक्तं बालरामायणे—

'बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः ॥'

भौगोलिकं ज्ञानं दर्शं दर्शं समीक्षकाः मुह्यन्ति । काव्यमीमांसा बालरामायणस्य दशमोऽङ्कस्तु भौगोलिकं विवरणं प्रस्तौति एव । भुवनकोषनामकं भौगोलिकं ग्रन्थमपि कृतमनेनेति बहवः[1] । भाषापाण्डित्यं तु लोकोत्तरमेव । यथोक्तं तेनैव—

'गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे
निबद्धा यस्तेषां स खलु निखिलेऽस्मिन् कविवृषा ॥'

**रचना**—बालरामायणे सूचयति कविः स्वप्रबन्धषट्कत्वम्—'विद्धि नः षट् प्रबन्धान्'—इति वदन् । किन्तु पञ्चैव सर्वाक्षिगोचराः, हरविलासस्तु अनुपलब्ध एव । शिष्टास्तु—१. बालरामायणम्, २. बालभारतम्, प्रचण्डपाण्डवं वा, ३. विद्धशालभञ्जिका, ४. कर्पूरमञ्जरी, ५. काव्यमीमांसा च ।

**१. बालरामायणम्**—नाटकमिदं रामायणकथाश्रितम् । दीर्घाः दशसंख्यकाः अङ्काश्चात्र सन्ति । कवेः काव्यप्रतिभाऽत्रावलोक्यते । पूर्वरामचरितमेवात्र सम्यगुपनिबद्धम् । प्रथमाङ्के जनकपुरीमागतस्य रावणस्य सीतोद्वाहप्रतिज्ञा, द्वितीये रावणपरशुरामसंवादः, तृतीये सीतावियोगखिन्नस्य दशाननस्य मनोविनोदाय गर्भनाटकरूपेण शिवधनुःखण्डनोत्तरं सीतारामविवाहः, चतुर्थे राघवपरशुरामसंवादः, पञ्चमे सीतावियोगोन्मत्तदशाननस्य स्वमनोरञ्जनाय ऋतुवर्णनम्, षष्ठे रामवनवासावसरे दशरथस्य निर्दोषताख्यापनं, सप्तमे राघवसागरसंवादोत्तरं सेतुबन्धः, अष्टमे कुम्भकर्णमेघनादादीनां वधश्रवणात् रावणमानभङ्गः, नवमे रावणवधः, दशमेऽयोध्यागमनञ्च ।

**२. बालभारतम्**—महाभारतीया कथा एवात्र समुपनिबद्धा । अङ्कद्वयमेव मिलति । पूर्णे ग्रन्थे समुपलब्धे एव समीक्षा वरा । प्रतिभानस्य दर्शनं तु भवत्येव ।

---

१. ब० उपाध्याय—वही, पृ० ५६० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३ विद्धशालभञ्जिका—इयं नाटिका। अङ्कचतुष्टयमत्र। लाटेश्वरनिदेशात् अस्या अभिनयोऽभवत्। तत्रैव चावसत् कविः किञ्चित् कालम्।

४. कर्पूरमञ्जरी—सट्टकमिदम्। अङ्काश्चत्वारः। वसन्तवर्णनेनारम्भः। भैरवानन्दनामा तान्त्रिकः अलौकिकसिद्धया विदर्भराजसुतां कर्पूरमञ्जरीं स्नानागारादानयति नायकसमक्षम्। नायकप्रेमविह्वला सा मदनलेखमाध्यमेन तं सूचयति। हिन्दोलकचतुर्थ्यां च राजा तामवलोकयति। सर्वमिदं नायकस्य प्रेमप्रपञ्चं श्रुत्वा महाराज्ञी कर्पूरमञ्जरीं स्वरक्षिकामध्ये निगडयति। भैरवानन्दयोजनया सार्वभौमत्वप्राप्तये नामपरिवर्तनपुरस्सरं घनसारमञ्जर्या सह नृपोद्वाहः। इयदेव कथानकमङ्कचतुष्टये समुपनिबद्धम्। प्राकृतभाषया रचनेयं प्रस्तुता।

५. काव्यमीमांसा—आचार्यत्वसाधकं ग्रन्थमिदम्। अत्र अष्टादशाध्यायाः। विशालोऽयं ग्रन्थ आसीत् परमद्य नोपलभ्यते सम्पूर्णम्। प्रथमाध्याये साहित्यसम्प्रदायप्रवर्तनोद्देश्यं, द्वितीये वाङ्मयभेदाः, तृतीये काव्यपुरुषसाहित्यविद्यावधूद्वाहादिकं, चतुर्थे शिष्यभेदनिरूपणं भावकत्वकविस्वभेदोपपन्नं, पञ्चमे व्युत्पत्तिप्रतिभालक्षणं पाकादिविवेकश्च, षष्ठे पदविवेचनं, सप्तमे वाक्यभेदादिकमष्टमे काव्यार्थकारणोदाहरणं, नवमे दिव्याद्यर्थनिरूपणं, दशमे कविचर्यादिकम्, एकादशे शब्दार्थानुहरणविमर्शः, द्वादशेऽर्थानुहरणप्रभेदाः, त्रयोदशे चालेख्यप्रख्यादिनिरूपणं, चतुर्दशे कविसमयादिकं, पञ्चदशे गुणसमयस्थापनादिकं, षोडशे स्वर्गपातालसमयादिविवेचनं, सप्तदशे देशविभागः, अष्टादशे कालविभागश्चोपवर्णितः। साहित्यकाराणां कृतेऽयमुपयोगी।

समीक्षणम्—महाकवेरस्य भाषोपरि महानधिकारः। प्राकृतादिभाषाप्रयोगस्य पाटवं दृष्ट्वा प्रतिभाप्रशंसनायोल्लासो मानसे उदेत्येव। शब्दकविरयम्। अस्य पदानां रमणीया शय्या कं रसिकं नायिकेव न हरति। शब्दचमत्कारोऽस्य रचनायाः प्रधानं गुणम्। लोकोक्तिप्रयोगे निपुणोऽयम्। शैली चास्य गौडी प्राधान्येन। स्थाने स्थाने पाश्चाल्या अपि दर्शनं भवति। परं रसस्य सा धारा न प्रवहत्यत्र या कालिदासे भवभूतौ वा दृश्यते। प्रकृतिमानवयोर्रागात्मकसम्बन्धोपरि कविध्यानं न ददाति। नास्ति गतिशीलताऽस्य नाटकेषु। पात्राण्यस्य सजीवानि। शार्दूलविक्रीडितस्रग्धरादिप्रयोगेऽस्य नैपुण्यं मोदाय एव। काव्यप्रतिभाप्रदर्शनाय दिङ्मात्रमुदाह्रियते—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमद्युतिः ।
पारुष्यं कलया च कोकिलवधू कण्ठेष्विव प्रस्तुतं
सीताया पुरतश्च हन्त शिखिनां बर्हा सगर्हा इव ॥

—बा० रामा० १।४२

परं जोण्हा उण्हा गरलसरिसो चन्दणरसो
खअक्खारो हारो रअणिपवणा देहतवणा ।
मुणाली बाणाली जलइ अ जलाद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवअणा सा सुणअणा ॥

—कर्पूर० २।१०

अथवा

जाणे पङ्करुहाणणा सिविणए मं केलिसज्जागअं
कंदोट्टेण तडिक्ति ताडिडमणा हत्थंतरे संठिआ ।
ता कोडेण मए वि झत्ति धरिआ ढिल्लं वरिल्लंचले
तं मोत्तूण गअं अ तीअ सहसा णट्ठा अ णिद्दा बि मे ॥

—तदेव, ३।३

## ( ३२ ) श्रीहर्षः

अथवा ( सं० सं० वि० वि० ७८, ७९ )

## नैषधं विद्वदौषधम्

अथवा

## उदिते नैषधे काव्ये क्व माघः क्व च भारविः

**जीवनम्**—पुत्रः केवलं पितुर्धनादिकमेव न स्वीकरोति अपि तु जयपराजयादिकमपि, इति श्रीहर्षकथया ज्ञायते । हीरोऽस्य पिता मामल्लदेवी अल्लदेवी वा जननी इति नैषधसर्गान्तश्लोकेन ज्ञायते । यथा—

'श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।'

श्रीहीरः केनाऽपि द्वैतवादिना नैयायिकेन उदयननामधारिणा पराजितः पञ्चत्वमाप । अन्ते च सः श्रीहर्षमुवाच—पुत्र ! पराजयो हृदि कण्टकायते । योग्योऽसौ सुतः तं द्वैतवादिनमजयत् शास्त्रार्थे । न्यायकुसुमाञ्जलिनामकग्रन्थस्य च खण्डनं खण्डनखण्डखाद्यनामके स्वीये ग्रन्थे निपुणं चकार । चिन्तामणि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्त्राराधनेन प्राप्तविशेषशक्तिकः श्रीहर्षः लोकबुद्ध्यग्राह्यं लिखति स्म। भगवत्युपदेशात् स रात्रौ तक्रं पीत्वा शिरश्च जलेनाभिषिच्य यल्लिलेख तदपि मादृशां कृते कठिनमेव। एतद्विचार्य एवोक्तं 'नैषधं विद्वदौषधमि'ति। सर्वमग्रे प्रपञ्चयिष्यामः।

**समयः**—नैषधे ( २२।१५५ ) लिखितमस्ति—

'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्।'

अनेनानुमीयते यत् कविरयमवसत् ११५६ खिृष्टाब्दात् ११९३ खिृष्टाब्दं यावत्। यतो हि अयमेव विजयचन्द्रजयचन्द्रयोः शासनकालः। समर्थयति च मतमिदं श्रीबलदेवोपाध्यायः संस्कृतसाहित्येतिहासे २२८ पृष्ठे गैरोला च ७४० पृष्ठे।

**रचनाः**—कवेरस्याधोलिखिता रचनाः मिलन्ति—

१. **स्थैर्यविचारणप्रकरणम्**—दार्शनिकग्रन्थोऽयमिति विदुषां विचारः।

२. **विजयप्रशस्तिः**—जयचन्द्रपितुः विजयचन्द्रस्य प्रशंसापूर्णं काव्यमिदम्।

३. **खण्डनखण्डखाद्यम्**—उदयनप्रणीत-न्यायकुसुमाञ्जलिनामकग्रन्थस्य अद्वैतवेदान्तधिया खण्डनमिदम्।

४. **गौडोर्वीशकुलप्रशस्तिः**—वङ्गभूमिपालकानां प्रशंसाऽत्रास्तीति इतिहासकाराः।

५. **अर्णववर्णनम्**—सागरस्य वर्णनं भविष्यत्यत्र।

६. **छिन्दप्रशस्तिः**—कस्याऽपि छिन्दनामकनृपस्य प्रशंसाऽत्रेति ज्ञायते।

७. **शिवशक्तिसिद्धिः**—शिवस्य शक्तेर्भक्तेर्वा सिद्धिकथानकमत्रेति विद्वान्सः।

८. **नवसाहसाङ्कचरितञ्चम्पूः**—भोजराजस्य पितुः सिन्धुराजस्य चरितमत्रोरवर्णितमिति वान्यस्येति श्रीबलदेवोपाध्यायाः।

९. **नैषधीयचरितम्**—द्वाविंशतिसर्गात्मकं २८३० श्लोकात्मकं महाकाव्यमिदमिति सरस्वतीसमुपासकाः। एकोनविंशछन्दांस्यत्र। सप्तसर्गेषूपजातिः, चतुर्षु वंशस्थं वृत्तं प्रयुक्तं कविना। २३ टीकाश्चास्य। मल्लिनाथ-नारायण-जीवानन्दविद्यासागर-सिद्धान्तवागीशानां टीका एव समुपलब्धाः।

उपरिलिखितेषु ग्रन्थेषु द्वौ एव प्राप्तौ तृतीयो नवमश्च।

**समीक्षणम्**—'नैषधं विद्वदौषधमि'ति भणता समीक्षकेणोद्घोषितमस्य पाण्डित्यम्। कवेः शास्त्रज्ञानं विशिष्टकोटिकम्। यथा—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यायदर्शनं समालोचयन् वदति—

'मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ॥'

वैशेषिकं समालोचयन्नाह—

'ध्वान्तस्य वामोरुविचारणायां वैशेषिकं चारु मतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत् क्षमस्तमस्तत्त्वनिरूपणाय ॥'

व्याकरणमपि समीक्षयति—

'शशो यदस्यास्ति शशी ततोऽय-
मेवं मृगोऽस्यास्ति मृगीति नोक्तम् ।'

अथ च—

'उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥'

अद्वैतं समर्थयन्नाह—

'श्रद्धां दधे निषधराड्विमतौ मताना-
मद्वैततत्त्व इव सत्यतरेऽपि लोकः ।'

श्रीहर्षः स्वकाव्यस्य वैशिष्ट्यं स्वयमेव स्वकाव्ये लिखति—

१. तस्य काव्यं कविकुलनिर्दिष्टपथभिन्नं यथा स सूचयति सर्गेऽष्टमे—'कविकुलादृष्टाध्वपान्थ' इति विशेषणमाध्यमेन ।

२. तस्य रसबोधोऽपि ज्ञातपरम्पराभिन्नः । यथा स वदति विंशे सर्गे—'अन्याक्षुण्णरसप्रमेयभणितिः' इति विशेषणेन ।

३. तेन सर्वत्र नवा एव अर्थाः घटिताः । क्वचिदपि पुनरुक्तिर्नास्ति । यथा स स्वीकरोति—'एकामत्यजतो नवार्थघटनाम्' इति विशेषणेन । सः सर्वत्र पण्डितगम्याया एव भाषायाः प्रयोगं करोति न क्वचित् पामरजनक्षुण्णायाः । नारीरूपचित्रणे, प्रकृतिवर्णने, मनोदशाचित्रणे नगरादिवर्णने नवामेव कल्पनां प्रस्तौति कविः । भैमीनयनखञ्जनः नलरूपदर्शनात् पङ्गुरभवत् । ब्रह्मा दमयन्तीवदननिर्माणाय चन्द्रमसः सारांशं जग्राह येन नभसः श्यामता कृष्णतारूपेण लक्ष्यतेऽथवा नलप्रयाणोत्थितधूलिपातोत्पन्नपङ्क एव कृष्णत्वाय कल्पते । सोमस्य द्विजता विरहिचर्वणात्, न च वेदप्रतिपादितात् कामस्य पञ्चशरता च प्रपञ्चात्, न च शरसंख्याबोधनात् । यथा च द्वित्राण्युदाहरणानि—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(क) 'अजनि पङ्गुरपाङ्गनिजाङ्गण भ्रमिकणेऽपि तदीक्षणखञ्जनः ।'
(ख) 'यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥'
(ग) 'पञ्चास्यवत् पञ्चशरस्य नाम्नि प्रपञ्चवाची खलु पञ्चशब्दः ।'

उक्तीनां नवीनतां पुनरुक्तेरभावं लोकोत्तरं पाण्डित्यं दार्शनिकतां च विलोक्यैव सुधीभिरुक्तम्—

'उदिते नैषधे काव्ये क्व माघः क्व च भारविः ।'

वस्तुतः भारविमहोदयेन या चमत्कारपूर्णा शैली प्रारब्धा तस्याः चरमोत्कर्षः श्रीहर्षे एव दृश्यते इति समीक्षकमतम् । या रसपूर्णा शैली कालिदासेन प्रारब्धा सा कस्मिंश्चिदपि साहित्यकारे नोपलभ्यते । समीक्षकास्तु तत्रैव दर्शितादरा । परं न रमते हृदयं तत्र रचनाकाराणाम् ।

रसप्रयोगोऽमीषामनुत्तममिति न वक्तुं शक्यते करुण-विप्रलम्भचित्रणे कवेरस्य नैपुण्यं दर्शनीयमेव । हंसस्य कथनं क्रूरहृदयेष्वपि कारुण्योत्थापकम्—

'निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः सुतशोकसागरः ।'

+ + +

'मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदताथ पक्षिणः प्रिये स कीदृक् भविता तव क्षणः ॥'

नैषधप्रशंसायां श्रीहर्षप्रशंसायां च समीक्षकैर्बहु भणितम् । सर्वैः प्रतिभायाः प्रसारोऽत्र दृष्टः पेशलः । रसवत्ताभावश्च कालिदासापेक्षया दुनोति केषाञ्चित् चित्तम् । किन्तु किं करणीयम् ? कविस्तु प्रजापति एव ।

## (३३) शूद्रकः

अथवा (सं० सं० वि० वि० ७९)

## मृच्छकटिकम्

(सं० सं० वि० वि० ८६)

**जीवनम्**—मृच्छकटिकादेव ज्ञायते (१।४–५) यदयं हस्तिशास्त्रपण्डितः शिवानुग्रहात् प्राप्तज्ञानोदयः कृताश्वमेधः सिंहासनोपस्थापितसुतः शतायुश्चासीत् । शोभनशरीरोऽयमग्निं प्रविष्ट इति भूतकालिकक्रियया सन्देहलवो वर्धते । पङ्क्तिरियं कविकृता नास्तीति विद्वांसः । विक्रमादित्यवच्छूद्रकोऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कृतसाहित्ये प्रसिद्धः। अयमवसद् विदिशायामिति कादम्बरी शोभावत्यामिति कथासरित्सागरः वर्धमाने इति वेतालपञ्चविंशतिः चकारै इति हर्षचरितं सूचयति। राजतरङ्गिणीकारोऽपि परिचितः कविना स्कन्दपुराणं रामिलसोमिलावपि।

**समयः**—पुराणानां शिमुक एव शूद्रक इति केचित्। तथात्वेऽयं कालिदासतोऽपि प्राचीनः। परं नास्ति वर्णनं मृच्छकटिकस्य कालिदासकालोपयुक्तम्। वामनेन काव्यालङ्कारसूत्रवृत्तौ मृच्छकटिकस्योद्धरणं दत्तं दण्डिना च काव्यादर्शे। अनेनानुमीयते यदयं दण्डिनः पूर्ववर्ती। नवमाङ्के चारुदत्ताभियोगनिर्णये समाश्रितया मनुस्मृतिसरण्या मनूत्तरवर्तिताऽस्य सिद्धा। मृच्छकटिकस्य रचना भासरूपकानुहारिणीति बलदेवोपाध्यायाः। अतः शूद्रकस्य कालः भासोत्तरमेव स्वीकरणीयः।

अन्यदपि—मृच्छकटिकस्य नवमेऽङ्के गुरुभौमयोर्विरोधः स्वीकृतः। अद्य तु वाराहमिहिरानुसारमुभौ मित्रत्वेन स्वीकृतौ। वाराहमिहिरस्य कालः ५००-६०० खिष्टाब्दः। अतः शूद्रकः कालः ५०० खिष्टाब्दात् पूर्वमेव स्वीकरणीयः।

**रचना**—मृच्छकटिकमस्य रचना इति विद्वान्सः। सिलवा-लेवी-महोदयः कीथमहोदयश्चास्य शूद्रककर्तृत्वं न स्वीकुरुतः। पिशेलमहोदयमतेऽस्य कर्ता दण्डी इत्यपि न युक्तिसहम्।

**मृच्छकटिकम्**—अलङ्कारन्यासः-द्यूतकसंवाहकः-संधिच्छेद-मदनिका-शर्विलक-दुर्दिनं—प्रवहणविपर्यय-आर्यकापहरण-वसन्तसेनामोचन-व्यवहार-संहार-संज्ञकाश्चात्र दशाङ्काः यत्र तदनुसारिणी एव कथा। वसन्तसेनाभिधां गणिकां राज्ञः श्यालकः शकारोऽनुकूलयितुमनुगच्छति रात्रौ। शकारवचसा ज्ञातवृत्ता सा चारुदत्तगेहं प्रविशति यत्र मैत्रेयवचसा तस्यावरोधः। सा च सुवर्णाभरणानि तत्रैव स्थापयति। प्रातः संवाहकः द्यूतरसिकः पलायितो भवति। चारुदत्तस्तमृणान् मोचयति। स च बौद्धभिक्षुको भवति। वसन्तसेनायाः हस्ती तं मर्दयितुमिच्छति। कर्णपूरकश्च तं रक्षति। शर्विलकः मदनिकां सेवनात् मोचयितुमिच्छति स्नेहपरवशश्च खातपातनपूर्वकं वसन्तसेनाभूषणानि चोरयति। सालङ्कारश्च याति तद्गृहं मोचयति च मदनिकाम्। चारुदत्तभार्या चोपहाररूपेण तस्मै रत्नावलिं ददाति। स च तां वसन्तसेनायै ददाति। सा च प्रतीक्षमाणं चारुदत्तं गत्वा यापयति निशाम्। पुष्पकरण्डकस्थं चारुदत्तं द्रष्टुं जिगमिषन्ती

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसन्तसेना भ्रमविह्वला शकारशकटमारोहति । कारागृहात् पलायितो गोपालश्च चारुदत्तशकटमारोहति । शृङ्खलाशब्दं भूषणस्वनं मत्वा यावत् स वाहयति शकटं तावद् राजपुरुषौ समायातौ । तयोरेकः रक्षणधियाऽपरेण कलहायते । वसन्तसेना च पुष्पकरण्डकं गत्वा शकारं पश्यति तेन धर्षिता च मूर्च्छिता भवति । संवाहकश्च तां रक्षति । चारुदत्तश्च न्यायालये वसन्तसेनामारणविषयकं वादमुपस्थापयति । वादविचारनिरते न्यायाधीशे चारुदत्तसुतो रोहसेनः साभरणः समायाति येन स मृत्युदण्डमवाप्नोति । समयेऽस्मिन् राजसत्तापरिवर्तनात् आर्यको भवति राजा । स च मिथ्याभियोगेन शकारं दण्डयति । चारुदत्तप्रार्थनया च तमपि त्यजति । चारुदत्तवसन्तसेनोद्वाहेन च रूपकसमाप्तिः ।

समीक्षणम्—चारुदत्तवसन्तसेनाकथानकं भासकृतदरिद्रचारुदत्तप्रभावितम् । शिष्टं कविकल्पनोत्थम् । चरित्रचित्रणं सफलम् । पात्राणां सजीवता मनोहारिणी । नायकस्य सदाचारप्रियताऽविस्मरणीया । प्रपञ्चपाटवाय शकारोऽपि स्मरणीय एव । वसन्तसेनायाः स्नेहशीलता, धूतायाः पातिव्रत्यं, मैत्रेयस्य भ्रातृत्वमपि प्रशंसायोग्यम् । शकारनिर्माणे कविः साधीयान् । सः राज्ञः श्यालकः, मूर्तिमान् गर्वः, क्रूरताया अवतारश्च । चारुदत्तस्याकारणशत्रुः । अज्ञानस्य राशिः । तन्मते रामात् द्रौपदी बिभेति, मारुतिश्च सुभद्रया सह पलायितोऽभूत् । सः सदा क्रमविरुद्धं लोकविरुद्धं न्यायविरुद्धमेव वदति ।

भारतीयनाटकेषु वैदेशिकपात्रकल्पना सर्वप्रथममत्रैवावलोक्यते । परं नोज्जीविता परम्परेयं पुनः केनापि साहित्यकारेण । डा० सिल्वालेवीमहोदयः तं शकजातीयं मनुते । यद्यपि नाटके तद्देशजातिविषये किमपि न सूचितम् ।

शूद्रकः समाजचित्तं यथार्थरूपेण चित्रयति । वादनिर्णयः स्मृत्यनुसारमभवत् । प्रवेशकारा अपि आसन् । ब्राह्मणा अपि व्यापारिण आसन् । बौद्धधर्मोऽपि प्राप्तप्रसरः । क्रीतदासपरम्परा अपि आसीत् । ब्राह्मणेष्वपि दुराचारा प्रादुरभूवन् । द्यूतं चौर्यं तेषां सामान्यं कृत्यमासीत् । शर्विलक एतादृश एव । यज्ञोपवीतोपरि तस्य टिप्पणं ध्येयम्—

‘एतेन मापयति भित्तिषु दण्डमार्गान्
नेतेन मोचयति भूषणसम्प्रयोगान् ।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनं च ॥’

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रचलमानां परम्परामनादृत्य मध्यमपात्रयोजने शूद्रकः ज्यायान्। तस्य चरित्राणि पुरि पुरि चत्वरे चत्वरे मिलन्ति। तानि न वर्गप्रतिनिधिभूतानि। अपि तु व्यक्तिरूपाण्येव। 'शङ्कर' मते स्वरूपमेतेषां सार्वभौमम्।

**भाषा-शैली**—प्राकृतोपयोगाय शूद्रको धन्यवादार्हः। पृथ्वीधरानुसारमत्र भाषाचतुष्टयं विभाषात्रयं चोपनिबद्धम्। ताश्च क्रमेण शौरसेनी मागधी अवन्तिका प्राच्या शकारी चाण्डाली ढाक्की। एकादशपात्राणां भाषाऽस्ति शौरसेनी, षण्णां मागधी, द्वयोरवन्ती, एकस्य प्राच्या, एकस्य शकारी, द्वयोश्च चाण्डाली द्वयोरेव च ढाक्की। अस्य शैली सरला सरसा। दीर्घच्छन्दसामभावः। नवीनभावबाहुल्यं, रसश्चात्र शृङ्गारः। वर्षावर्णनमुद्वेजयति पाठकम्। संक्षेपेण यथार्थवादीया प्रस्तुतिः सर्वाकर्षणकारणम्।

## ( ३४ ) भर्तृहरिः

अथवा ( सं० सं० वि० वि० ८३ )

## भर्तृहरिशतकम्

( सं० सं० वि० वि० ८६ )

**जीवनवृत्तम्**—महाकवेरस्य जीवनवृत्तमज्ञातमेव। केषाञ्चिन्मते अयं राजा आसीत् विक्रमादित्यस्य च ज्येष्ठो भ्राता[1]। केषाञ्चिन्मते महावैयाकरणोऽयमलिखच्च वाक्यपदीयादिकम्। अस्य गुरोर्नाम वसुरातः इति सूचयति पुष्पराजः[2]। बौद्धोऽयमिति इत्सिङ्गमहोदयः[3] वैदिकमतावलम्बी इति सूचयति संस्कृतव्याकरणेतिहासः २५७ पृष्ठे। शूद्रकस्यायं भ्राता इति प्रबन्धचिन्तामणिः १२१ पृष्ठे। मीमांसकमते कवेरस्य कालः ४५० विक्रमपूर्वः। नैतद् रुचिरमिति गैरोला[4]। भर्तृहरिः भट्टिश्च एक एवेति कथनं भ्रमपूर्णम्[5]। हल्टज्महोदयोऽपि

---

१. बलदेवोपाध्याय—सं० सा० का इति० पृष्ठ ३३५।

२. गैरोला—वही, पृ० ५५५।

३. इत्सिग—भारतयात्रा, पृ० २७४।

४. गैरोला—सं० सा० का इति० पृ० ५५६।

५. कीथ—हिस्ट्री आफ संस्कृत लिटरेचर, पृ० १७५। तथा जे० आर० ए० एस० पृ० ३९५–९७।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न स्वीकरोति उभयोरैक्यम्[१]। ७०० खिष्टाब्देऽयमासीदिति बलदेवोपाध्यायस्यानुमानम्[२]। अयं वाक्यपदीयकारतो भिन्न एवेति मत्वा तस्य साहित्यिकवैशिष्ट्यं प्रस्तूयते।

रचना—शतकत्रयमस्य नाम्ना मिलति—१. नीतिशतकम्, २. शृङ्गारशतकम्, ३. वैराग्यशतकञ्च।

१. नीतिशतकम्—अत्र ११० श्लोकाः सन्ति। जीवनं सूक्ष्मेक्षिकया दृष्ट्या निपीय लोकोपदेशोपयुक्तं मङ्गलकरं जीवनानुभवं कविना समुपनिबद्धम्। एकाधिकोऽसौ प्रणयव्यापारः गरलोपमः। कुलजीवनसमाजनाशकरश्च। शिक्षयतीदं तथ्यं कविः श्लोकेनानेन—

'यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च॥'

इत्थमेव मूर्खस्य, विद्यायाः, भूषणस्य, सत्सङ्गतेः नीचादेश्च स्वानुभूतं चित्रमत्रोपवर्णितं कविना। पण्डितमण्डली अहरहः श्लोकानामेतेषां प्रयोगं करोति। सर्वो जनः अनुभवं न करोति, यः अनुभवति सः कथने समर्थो न भवति, यः कथने समर्थो भवति स सहृदयहृदयावर्जने समर्थो न भवति। सर्वमिदं विभाव्यैव कविः स्वानुभवं प्रकाशयति।

२. शृङ्गारशतकम्—अत्र १०० श्लोकाः सन्ति। रसानां राजा शृङ्गारः। स च सर्वजीवनगतः। परं सर्वो जनः न जानाति नारीहृदयम्। नारी च प्रेमपाशैर्बद्ध्वा नर्तयति पुरुषम्। कामुकश्च सर्वं करोत्येव। विद्वानपि तथैव मुह्यति यथा पामरः। यथा च कविः—

'दृष्ट्वा मुह्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि।'

सन्मार्गाश्रयणं च पुरुषस्य सुन्दरीदर्शनपूर्वमेव। दर्शनोत्तरं तु तस्य वशवर्तिता लोकरूढा एव—

---

१. एपिग्राफिया इण्डिका, पृ० १२।

२. संस्कृत साहित्य का इतिहास, पृ० ३३५।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणाम् ।'

\+ \+

'यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ।'

३. वैराग्यशतकम्—अत्र सर्वाधिकाः श्लोकाः सन्ति । मानवः शनैः शनैः विषयपराङ्मुखो भवति । विषयोपनिपाताश्च कमपि न त्यजन्ति । ज्ञात्वाऽपि सर्वं मनः तत्रैव यातीति महदाश्चर्यम्—

'व्याघ्रीव तिष्ठति जरा परितर्जयन्ती ।
रोगाश्च शत्रव इव प्रहरन्ति देहम् ॥'
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाऽप्यहितमाचरतीति चित्रम् ।'

भाषा—कवेर्भाषा सरला स्वल्पसमासा । व्याकरणसम्मतेयम् । सदुदाहरणपेशला । भावसंवाहिका । मनोभावानां चित्रणे कविः सफलः । यथा—

'मही रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः
सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥'

उपमारूपकोत्प्रेक्षादीनां प्रयोगोऽत्र दृश्यते । अनुभवस्यायमाकरः ।

शैली—प्रसादपूर्णा भावाभिव्यञ्जिकाऽस्य महाकवेः शैली । प्रकृतिवर्णनमुपमानोपमेयरूपेणोपलभ्यते । यथा—

'धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायतामानन्दाश्रुकणान् पिबन्ति शकुना निःसङ्गमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥'

समीक्षणम्—यथा नीतिविचारे शिखरस्थः कविः, तथैव शृङ्गारविमर्शे तथैव वैराग्यप्रदीपे च । अन्तिमे श्रद्धाधिकेति समीक्षकाः । स्वल्पशब्दैः कविः वर्गचरित्रं व्यक्तिचरित्रं चोद्घाटयति । कामिनी न केवलं मोदाय अपि तु क्लेशाय । मूर्खः सर्वस्यापकारमेव करोति । विवेकख्यातिः सर्वं कृत्वा दृष्ट्वा वोदेति । क्षुद्राः महापुरुषदूषणाय एव । विषयाणां क्षुद्रता मूर्खाणां सम्पर्कः कं


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोद्वेजयति। क्षुद्रस्य महाजनस्य चारित्रिकभेदो धिया ग्राह्यो भवति। इत्थं कविः प्रकीर्णविषयेषु कवयति तथापि लोकलाभाय एव सततं यतते। अनुभवस्य सूक्ष्मनिरूपणमत्र प्रशंसायोग्यम्।

## ( ३५ ) रामायणम्

( सं० सं० वि० वि० ८६.)

अथवा

## वाल्मीकिः

अथवा

## धन्या रामायणी कथा

**रामायणम्**—रामायणस्यापरं नाम अस्ति चतुर्विंशति साहस्रीसंहिता। काव्यमिदं काण्डेषु विभक्तम्। यथा—१. बालकाण्डम्, २. अयोध्याकाण्डम्, ३. अरण्यकाण्डम्, ४. किष्किन्धाकाण्डम्, ५. सुन्दरकाण्डम्, ६. युद्धकाण्डम् ७. उत्तरकाण्डञ्च। काण्डेष्वेषु क्रमेण ७७, ११९, ७५, ६७, ६८, १२८, १११ अध्यायाः सन्ति। वाल्मीकिनारदसंवादेन च ग्रन्थारम्भः। आदिकाव्यमिदमुच्यते।

**कथानकम्**—अयोध्यानृपतेर्दशरथस्य सुतः राम एव कविवर्णनविषयभूतः। रामस्य उत्पत्तितः स्वर्गारोहणं यावत् वृत्तमत्र गुम्फितम्। परं तत्कालस्य सूक्ष्ममैतिहासिकं भौगोलिकं साहित्यिकं सामाजिकं किमपि तथ्यमत्र न त्यक्तम्। राजवंशानां चरित्रं कदाचारं समाजस्य नौचित्यपरम्परा संस्कृतिद्वयसम्पर्कजन्य-सङ्घर्षः सर्वमत्रोपनिबद्धम्।

रामः परब्रह्म। कारुण्याद् धरायामवतीर्णः। कालक्रमेण दशरथोऽस्य पिता, कौशल्या माता, जानकी पत्नी, अयोध्या जन्मभूमिश्च। सः आदर्शः पुत्रः, पतिः, पिता, भ्राता, राजा, शिष्यो गुरुश्च। द्वित्राण्युदाहरणानि साधयिष्यन्ति सर्वम्। लक्ष्मणे शक्तिविद्धे स कथयति—

'देशे देशे कलत्राणि देशे देशे च बान्धवः।
तं तु देशं च पश्यामि यत्र भ्राता सहोदरः॥'

स शत्रूनपि स्निह्यति। विभीषणस्य रक्षणमत्र प्रमाणम्। रावणे मृते तस्य भावनेयं स्फुटतरा—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥'

उदारतायाः, क्षमाशीलतायाः, दयायाः, भक्तेश्च निधानं स एक एव स्वोपमः नान्यः । एकमप्युपकारं गणयति न च शतानपकारान्, सदा दानं ददाति न च गृह्णाति । मधुरमेव वदति प्राणविपत्तावपि न वदत्यसत्यम्—

'कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥
दद्यान्न प्रतिगृह्णीयान्न ब्रूयात् किञ्चिदप्रियम् ।
अपि जीवित हेतोर्वा रामः सत्यपराक्रमः ॥'

तत्रभवती सीता साक्षाज्जगदम्बा । सापि आदर्शपत्नी, आदर्शमाता, आदर्शकन्या, आदर्शपुत्रवधूश्च । सा नेच्छति स्प्रष्टुं परपुरुषशरीरम् । कायेन वाचा मनसा सा राममेव ध्यायति । गृहान्निःसारिताऽपि किमपि न वदति । केवलं रामस्यैव सुखं चिन्तयति—

'भर्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर ।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तमम् ॥'

शिष्टानि चरित्राणि गौणरूपेण निबद्धानि । मारुतिचरित्रं लक्ष्मणचरित्रं भरतचरित्रं वसिष्ठचरित्रं च विशिष्टशोभाधायकम् ।

कालः—कुमारलातनामा बौद्धकविः ( १०० ई० ), विमलसूरिनामा जैनकविः ( ६२ ई० ), अश्वघोषः ( ७८ ई० ) च रामायणपरिचितः महाभारतमपि रामकथापरिचितम् । प्रमाणैरेभिः सिद्ध्यति यत् ख्रिष्टाब्दात् १०० वर्षपूर्वं रामायणस्य प्रचारप्रसारौ भवतः । रामायणे शोणगङ्गासङ्गमे रामगमनं वर्णितम् । तत्रैव च पाटलिपुत्रमजातशत्रुणा ५०० ख्रिष्टाब्दपूर्वं स्थापितमिति इतिहासकाराः । किन्तु पाटलिपुत्रानुल्लेखात् रामायणमितोऽपि पूर्ववर्तीति वक्तुं शक्यते । रामायणे विशालामिथिलानामनी पृथग्राज्ये आस्ताम् । बुद्धकाले तु एकमेव । हेतुनानेनाऽपि रामायणस्य पूर्ववर्तिता सिद्धा । मैकडानेलमहोदयोऽपि स्वीकरोतीदमेव कालम्[1] । जयचन्दविद्यालङ्कारः[2] काशीप्रसादजायसवालः[3],

---

१. हिस्ट्री आफ संस्कृत लिटरेचर, पृ० ३०६-९ ।
२. भारतीय इतिहास की रूपरेखा, पृ० १-४३२ ।
३. जे० बी० ओ० आर० एस० ४ पृ० २६२ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामधारीसिंहदिनकरमहोदयः,[१] गैरोलामहोदयोऽपि[२] समर्थयतीदमेव तथ्यम्। फादरकामिलवुल्केमहोदयः रामायणनिर्माणकालं ६०० ई० पू० यावत्[३] स्वीकरोति। श्लेगलमते[४] ११०० ई० पू० गोरेसियोमते च १२०० ई० पू० रामायणस्य निर्माणो बभूव।

समीक्षा—रामायणस्य भाषा सरला। शैली च प्रसादमधुरा। उपमारूपकाद्यलङ्काराः विशेषेण। प्रकृतिवर्णनं समृद्धम्। आनन्दवर्धन-भट्टतौतप्रभृतयः समीक्षाः समीक्षयन्तः कथयन्ति—

'सन्ति सिद्धरसप्रख्या ये च रामायणादयः।
कथाऽऽश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी॥'

\+ \+

'तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुने।
नोदिता कविता लोके यावज्जाता न वर्णना॥'

करुणो रसः अङ्गी शेषाणि चाङ्गानि। यथा च समर्थयति ध्वनिकारः—

'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥'

महाकविकालिदासोऽपि किञ्चिदित्थमेव वदति—

'निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः।'

रचनाकारः—परम्परां स्वीकरोति यदस्य ग्रन्थस्य रचनाकारो वाल्मीकिः। स च भृगुवंशीयः। प्रारम्भिकं जीवनमस्य प्रशंसितं नासीत्। रामनामप्रभावादेवास्य ख्यातिः प्रचलति अद्यापि। एका एवास्य रचना प्राप्यते। केषाञ्चिद् विदुषां मते इयम् एकव्यक्तेः रचना[५] नास्ति। भिन्नभिन्नव्यक्तिभिः भिन्नभिन्नकाले रचितमिदं काव्यम्।

---

१. संस्कृति के चार अध्याय, ६८।

२. संस्कृत साहित्य का इतिहास, पृ० १७९।

३. रामकथा, पृ० १०१।

४. जर्मन।

५. मैकडानेल—हिस्ट्री आफ संस्कृत लिटरेचर, पृ० ३०६।
जयचन्द्रविद्यालंकार—भारतीय इतिहास की रूपरेखा, १-४३२।
चन्द्रशेखर पाण्डेय—संस्कृत साहित्य की रूपरेखा, पृ० २०।
दिनकर—संस्कृति के चार अध्याय, पृ० ६८।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**टीका**—रामायणोपरि अधोलिखिताः टीकाः मिलन्ति । १. रामानुजीयटीका, २. सर्वार्थसारटीका, ३. रामायणदीपिका, ४. बृहद्विवरणम्, लघुविवरणम्, ५. तीर्थीयटीका, रामायणतत्त्वदीपिका, ६. रामायणभूषणम् ७. वाल्मीकिहृदय-टीका, ८. अमृतकतकटीका, कतकटीका वा, ९. रामायणतिलकटीका, १०. रामायणशिरोमणिटीका, ११. मनोहरा, १२. धर्माकूतम्, १३. चतुरर्थी ( केषाञ्चित् पद्यानाम् ) ।

**इतररामायणम्**—रामकथा बहुप्रकारेण कल्पिता बहुभिश्च लिखिता । यथा—१. योगवासिष्ठम्, २. अध्यात्मरामायणम्, ३. अद्भुतरामायणम्, ४. आनन्दरामायणम्, ५. तत्त्वसंग्रहरामायणम्, ६. भुशुण्डिरामायणम्, ७. मन्त्र-रामायणम्, ८. रामविजयः, ९. रामलिङ्गामृतम्, १०. राघवोल्लासः, ११. उदारराघवः, १२. पुराणवर्णितरामकथानकम्, १३. जैनमतावलम्बिरामकथा, १४. बुद्धमतावलम्बिरामकथा, १५. चीन-तिब्बत-खोतान-जावा-हिन्द-चीन-श्याम-ब्रह्म-प्रभृतिदेशेषु प्रचलिता रामकथा ।

**वैशिष्ट्यम्**—रामकथा हृदयहारितया देशे विदेशे च प्रसरति स्म । अद्यापि प्रसारोऽयमनवरुद्धः । सर्वत्र किञ्चित् परिवर्तनमुपलभ्यते । परं मूलकथा एका एव । पाश्चात्यदेशेष्वपि रामकथा प्रचारोऽस्ति इति सूचयति फादर-कामिल-वुल्के-कृता रामकथा ।

## ( ३६ ) महाभारतम्

अथवा                ( सं० सं० वि० वि० ८६ )

**वेदव्यासः**

अथवा

**नमः सर्वविदे तस्मै व्यासाय कविवेधसे**

अथवा

**तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे**

अथवा

**सृष्टा गौरीदृशी येन भवे विस्तारिभारता**

अथवा

**सुपर्वोपचितं चक्रे यः स्वर्गमिव भारतम्**

**महाभारतम्**—भारतीयसभ्यतायाः संस्कृतेश्च भव्यस्वरूपबोधाय ग्रन्थरत्न-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिदमावश्यकम् । भगवद्गीता-विष्णुसहस्रनाम-अनुगीता-भीष्मस्तवराज-गजेन्द्र-मोक्ष-संज्ञक पञ्चरत्नप्रदानादेवास्य पञ्चमवेदता । धर्मार्थकाममोक्षविषयकसम्यक् प्रबोधोऽत्रैव द्रष्टुं शक्यते । सत्यमुक्तं महर्षिणा—

'धर्मे अर्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥'

ग्रन्थोऽयं त्रिभिर्वर्षैः निर्मितः । यथा च सूचयति आदिपर्वणि—

'त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमुत्तमम् ॥'

अत्र लक्षैकश्लोकाः सन्ति । शतसाहस्रीसंहिता नाम्नाऽप्यस्य प्रसिद्धिः । अस्य ग्रन्थस्य मौलिकं रूपं जयनाम्ना प्रसिद्धम् । उपबृंहणोत्तरं भारतमभवत् । परिबृंहणोत्तरमस्य संज्ञाऽभवत् महाभारतमिति । पर्वणि विभक्तमिदं ग्रन्थम् । यथा—आदि-सभा-वन-विराट्-उद्योग-भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री-शान्ति-अनुशासन-अश्वमेध-आश्रमवासी-मौसल-महाप्रस्थानिक-स्वर्गारोहणाभिधपर्वाणि । तानि चाष्टादशसंख्यकानि ।

**प्रतिपाद्यम्**—चन्द्रवंशे कौरवोत्पत्तिः, द्यूतक्रीडा, पाण्डववनवासोऽज्ञातवासश्च, श्रीकृष्णस्य शान्तिप्रयासः, गीतोपदेशोऽभिमन्युवधः, द्रोणाचार्यकर्णशल्यवधः, स्त्रीविलापः, भीष्मस्य युधिष्ठिरशासनं, नीतिनिर्देशोऽश्वमेधयज्ञवर्णनम्, धृतराष्ट्रस्य वानप्रस्थाश्रमप्रवेशः, मुसलेन यादवनाशः, पाण्डवानां हिमगिरिगमनं, स्वर्गारोहणं चात्र मुख्यरूपेण प्रतिपादितम् । शकुन्तलाचरितं, मत्स्यावतारकथा, रामचरितं, शिविकथा, सावित्रीकथानकं, नलोपाख्यानादिकं चावान्तरविषयाः । उर्वशीकथा, अनिरुद्धोषोदन्तं, जन्मेजयवृत्तञ्च हरिवंशस्य प्रसिद्धं कथानकम् ।

**टीकाः**—डा० सुखठणकरेण अनन्तभट्टादिद्वाविंशतिटीकाकाराणां सूची प्रस्तुता । अपरटीकाकाराश्च सन्ति—गदानन्दः, जगद्धरः, जनार्दनः, विद्यानिधिभट्टः, वैशम्पायनः, शाण्डिल्यः, माधवः, रामकृष्णः, देवबोधः, विमलबोधः, नारायणसर्वज्ञः, चतुर्भुजमिश्रः, विद्यासागरः, अर्जुनमिश्रः, नारायणः, वादिराजः नीलकण्ठादयश्च ।

**समीक्षा**—महाभारते कविना भौतिकजीवनस्य निःसारता एवोट्टङ्किता । मोक्ष एव ज्यायान् । अतस्तत्रैव यत्नवता भाव्यं नरेणेति मुख्या प्रेरणा महाकवेः । न केवलमिदं काव्यमपि तु अर्थशास्त्रं, धर्मशास्त्रं कामशास्त्रं च । यथा च स्वयं भगवान् वेदव्यासः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् ।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥'

इयं वीराणां पुण्या कथा । राजनीतेः दर्पणमिदम् । कवीनामापाततः सहायकम् । जनतायै जीवनसंशोधनप्रकारः । नृपस्य प्रजायाश्चाधिकारकर्तव्यसूचिकमिदम् । भगवद्गीतायाः मूल्यं तु सर्वोपरि । कर्मणः ज्ञानस्य भक्तेश्च मञ्जुलं समायोजनमत्रोपनिबद्धम् । धर्मो न त्याज्यः कदापि । यथोक्तम्—

'न जातु कामान्न भयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥'

कर्मणः प्राधान्यमद्यैव न श्रूयते । तदाऽपि कर्मप्रधानता आसीत् । कर्महीनो नरः नर एव न स्वीकृतः तत्रभवता वेदव्यासेन—

'प्रकाशलक्षणा देवाः मनुष्याः कर्मलक्षणाः' ।

प्रकारेणानेन भारतभूमिः कर्मभूमिरिति । स्वर्गे तु कर्मणः फलं भुज्यते । तच्च कर्मभूमित्यागोत्तरमेव । मानव एव समाजस्य सभ्यतायाश्च केन्द्रविन्दुः । सम्पूर्णं ज्ञानविज्ञानादिकं तस्मै एव । ब्रह्मज्ञानस्यापि स एवाधिकारी । यथा—

'गुह्यं ब्रह्म तदिदं ब्रवीमि नहि मानुषात् श्रेष्ठतरं हि किञ्चित् ।'

ग्रन्थेऽस्मिन् राष्ट्रभावनाऽपि तथैव प्रस्तुता यथाऽऽत्मतत्त्वादिकम् । देशस्य कृषिप्रधानत्वमेव विभाव्य नेतृगणाय कृषिपाण्डित्यमपेक्षितम्—

'न नः समितिं गच्छेद् यश्च नो निर्वपेत् कृषिः ।'

सत्यदममोक्षाणां क्रमेण माहात्म्यं प्रतिपादयन्नाह—

'वेदस्योपनिषत् सत्यं सत्यस्योपनिषद् दमः ।
दमस्योपनिषन्मोक्ष एतत् सर्वानुशासनम् ॥'

सरलता एव मूलमन्त्रं सफलतायाः । वक्रः पन्थाः न कल्पते श्रेयसे । शास्त्राणीदमेवोपदिशन्ति । अन्यत् तु प्रलापमात्रम्—

'सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।
एतावान् ज्ञानविषयः किं प्रलापः करिष्यति ॥'

**रचनाकारः**—वेदव्यास एव कर्ता महाभारतस्येति परम्परा सुभाषितग्रन्थाश्च । पराशरोऽस्य पिता माता च सत्यवती । द्वीपे जन्मसत्वात् द्वैपायनः, शरीररङ्गात् कृष्णमुनिः कृष्णद्वैपायनो वा, वेदानां विभागाद् वेदव्यासश्च । स

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव धृतराष्ट्रस्य, विदुरस्य पाण्डोश्च कारणम्। पाण्डवानां न्यायप्रियतायाः, सत्यनिष्ठायाः सद्गुणराशेश्चापि निमित्तं स एव। महाभारतरूपमहानाशनिवारणाय स महायत्नमकरोत् किन्तु भवितव्यता एव इयमासीत्। ग्रन्थस्यास्य निर्माणे भगवतो गणेशस्यापि महद्योगदानमस्ति। बुद्धितत्त्वमत्र तु भगवतो वेदव्यासस्य किन्तु लेखनप्रयासस्तु भगवतो गणेशस्य। पुराणेषु अयमपि अवताररूपेण स्वीकृतः।

प्राचीनभारतस्य इमाम् प्रतिभां नमन्त्याधुनिकाः पुरातनाश्च समानरूपेण। नास्त्ययमितिहासकार एव। भूगोलवेत्ता, बहुभाषाज्ञाता, शस्त्रशास्त्रमर्मज्ञः, सेनापरिचितः, कलानिष्णातः, समाजशास्त्री, लोकाचारज्ञः, अर्थशास्त्री, कामशास्त्रपटुः धर्मशास्त्री च। वैचक्षण्यस्येदं निधानम्। यथोक्तम्—

'इदं कविवरैः सर्वैराख्यानमुपजीव्यते।'

\+ + + +

'यो विद्या चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः॥'

भाषायाः सरलता, शैल्याः प्राञ्जलता, विषयस्य स्पष्टता चैव भगवतो वेदव्यासस्य सर्वश्रेष्ठतानिमित्तम्। यथा च स्वयमेव आदिपर्वणि—

'श्रुत्वात्विदमाख्यानं श्राव्यमन्यन्न रोचते।
पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव॥'

ग्रन्थेऽस्मिन् भारतस्य अन्तरात्मा वदति, धार्मिकता विविक्ता भवति, नैतिकता प्रस्फुटति, सामाजिकता नृत्यति राजनीतिश्चादर्शतां याति। रामायणापेक्षया संस्कृतिः परिवर्तत्रेऽत्र चित्रचरित्रयोः सीमाङ्कनं क्रियते। सङ्घर्षस्यानिवार्यता स्वीकृता। सद्गुणानां विजयोऽपि दर्शितः।

## ( ३७ ) केषाञ्चित् साहित्यकाराणां सङ्क्षिप्तपरिचयाः

( १ ) भट्टिः—वलभीनरेशस्य श्रीधरसेनस्य सभासदोऽयम्। तत्र चत्वारो नृपा श्रीधरसेनसंज्ञकाः। प्रथमस्य कालः ५०० खिष्टाब्दः। अन्तिमस्य ६५० खिष्टाब्दः। द्वितीयेन भट्टिनामकाय विदुषे किञ्चिद् भूमिर्दत्तेति शिलालेखैर्ज्ञायते। स एव भट्टिकाव्यविधाता चेत् कालोऽस्य ६१० खिष्टाब्दः। यतः शिलालेखोऽयं तदैव लिखितः। केषाञ्चिन्मते प्रथमस्यैव सभासदोऽयम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**भट्टिकाव्यम्**—अस्य एका एव रचना मिलति । रावणवधनाम्नाऽप्यस्य प्रसिद्धिः । अत्र विंशतिसर्गाः ३६२४ श्लोकाः । राघवचरितमाध्यमेनात्र सरलरूपेण व्याकरणशिक्षा प्रदत्ता । साहित्यविषया अपि सन्निविष्टाः । शब्दालङ्कारयमकालङ्कारमाधुर्यगुणभाषाविमर्शादयोऽपि विवेचिताः । विभीषणवाक्येषु राजनीतिः शूर्पणखावाक्येषु कौटिल्यमृतुवर्णनं प्रभातवर्णनञ्च दर्शनीयमेव । छन्दांसि लघून्येवाधिकानि । अलङ्काराणि उपमारूपकोत्प्रेक्षादीनि । श्लोकोऽयमेकावलेरुदाहरणरूपेणावलोक्यते ग्रन्थान्तरेषु—

'न तज्जलं यन्न सुचारु पङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ।।'

( २ ) **कुमारदासः**—शार्ङ्गधरपद्धतौ, सुभाषितावल्यां, सदुक्तिकर्णामृते, पदचन्द्रिकायां, सर्वस्वकामधेनौ, गणरत्नमहोदधौ, उणादिसूत्रवृत्तौ, काव्यानुशासने, शृङ्गारप्रकाशे, काव्यमीमांसायां चोद्धृतः कुमारदासः लङ्कायामुत्पन्नो बभूव । पितुर्नाम मानितः । लङ्काधिपतेः कुमारमणेरयं सेनानी । बाल्ये एव स पञ्चत्वमाप ( २०।६० ) मातुलपालितोऽयं जानकीहरणं नाम काव्यं जग्रन्थ इति जानकीहरणादेव ( २०।६१–६२ ) ज्ञायते । डा० वासुदेवशरण-अग्रवाल-मतेऽस्य कालः ७०० ख्रिष्टाब्दः । जनाश्रयी छन्दोविचितिनामके ग्रन्थे जानकीहरणस्य श्लोकाः समुद्धृताः । उक्तपुस्तकस्य कालः पं० बलदेवोपाध्यायमते ( संस्कृत शास्त्रों का इतिहास, पृष्ठ २९५ ) ६०० ख्रिष्टाब्दस्य पूर्वार्धे एव । अतः कुमारदासस्य कालः तस्माद् प्रागेव । कुमारदासप्रेम्णा कालिदासः लङ्कामगमत् । तत्र कथञ्चित् तत्याज जीवनम् । कुमारदासोऽपि तमनुजगामेति किंवदन्ती सिंघलग्रन्थेषु चलति । कालभेदाद् विश्वासानर्हा ।

**जानकीहरणम्**—इयमेका एव प्राप्ता रचना कवेः । अत्र २० सर्गाः । कालिदासापेक्षया भारविप्रभावोऽत्राधिकः । एकाक्षररामायणीया एवात्र कथा । कालिदासापेक्षया भारविप्रभावोऽत्राधिकः । एकाक्षरद्व्यक्षर-सर्वतोभद्र-मुरजबन्ध-निरोष्ठ्यादिवर्णने कविः यत्नवान् । सन्ध्या-सूर्यास्त-चन्द्रोदयादिवर्णने प्रकृतिप्रेम लक्ष्यते कवेः । यथा—

'विरामः शर्वर्या हिमरुचिरवाप्तोऽस्तशिखरं
किमद्यापि स्वापस्तव मुकुलिताम्भोरुहदृशः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीवायं भानुः प्रमदवनपर्यन्तसरसीं
करेणाताम्रेण प्रहरति विबोधाय तरुणः ॥'

पितृसमयोः सीतारामयोः स्वच्छन्दां रतिलीलां चित्रयन् कविः विस्मरति श्रीमदभिनवगुप्तपादाचार्यसिद्धान्तान् रसनियामकानिति महदाश्चर्यम् ।

( ३ ) माघः—सुप्रभदेवोऽस्य प्रपितामहः दत्तकश्च पिता । वर्मलातनामकराज्ञः प्रधानमन्त्रित्वादाय सुप्रभदेवो महद्धनं यद् दाने दत्तं दत्तकेन । जन्मस्थानं चास्य भीनमालनामकस्थानं गुर्जरे । निर्धनो माघः 'कुमुदवनमपश्रि' ( ११ सर्गे ) इत्यादिश्लोकं पत्नीमाध्यमेन भोजं प्रेषयामास । सा ततः समासादितं धनं मार्गे याचकेभ्यः दत्तवती । रिक्तहस्तां तामालोक्य माघः पञ्चत्वमाप इति भोजप्रबन्धः । कालभेदात् स्वीकारायोग्येयं किंवदन्ती । आनन्दवर्धनोल्लेखात् कीलहार्नमहोदयानुसन्धानादस्य कालः ६५० ख्रिष्टाब्दात् ६०० ख्रिष्टाब्दात् यावत् । भारविगर्हणाय माघाभिख्येति याकोबीमतं न सम्मानार्हम् ।

शिशुपालवधः—चेदिनृपतेः शिशुपालस्य वधोऽत्र चित्रितः मुख्यतया श्रीमद्भागवतमाश्रित्य । सर्गाः सन्त्यत्र विंशतिः श्लोकाश्च १६५० । कथानकं तु लघु । प्रतिभया समुपबृंहितम् । श्र्यादिकं लक्ष्म्यन्तं च काव्यमिदम् । राजनीत्या सह वेदस्य, सांख्यस्य, योगस्य, बौद्धदर्शनस्य, नाटचशास्त्रस्य, ललितकलायाः, व्याकरणस्य च ज्ञानं प्रस्तौति काव्येऽस्मिन् । परिष्कृतपदविन्यासः, वक्रोक्तिप्रधानालङ्काराः, समासप्राधान्यं, गाढबन्धः प्रकृतिचित्रणं चात्र मिलति । नवीनोपमाः, नवीनोत्प्रेक्षाः, अर्थस्य गुरुताः, पदानां लालित्यं चावलोक्यैव केनचिदुक्तम्—'माघे सन्ति त्रयो गुणाः' इति । क्रमेणोदाहरणम्—

'यः उदात्तः स्वरानिव' ।

\+ + + +

'अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैव निम्नगाः' ।

\+ + + +

'शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥'

\+ + + +

'मधुरया मधुबोधितमाधवीमधुसमृद्धसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥'

( ४ ) क्षेमेन्द्रः—अस्य स्थितिकालः स्वीकृतः १००० ख्रिष्ट्राब्दः श्री पं० बलदेवोपाध्यायेन । अलौकिकप्रतिभा सम्पन्नः कविरयं कश्मीरदेशजः । पितृपुत्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योरनन्तकलशयोः राज्ञोः ( १०२८-१०८९ ख्रिष्टाब्दं यावत् ) शासनकालेऽवसदयम् । निजदेशस्य अशान्तवातावरणं शमयितुं बहु यत्नमकरोत् कविः ।

**रचनाः**—एतत्प्रणीतं साहित्यमस्ति—१. रामायणमञ्जरी, २. भारतमञ्जरी, ३. बृहत्कथामञ्जरी, ४. दशावतारचरितम्, ५. अवदानकल्पलता, ६. कलाविलासः, ७. समयमातृका, ८. चारुचर्याशतकम्, ९. सेव्यसेवकोपदेशः, १०. दर्पदलनम्, ११. देशोपदेशः, १२. नर्ममाला, १६. चतुर्वर्गसंग्रहः, १४. कविकण्ठाभरणम्, १५. औचित्यविचारचर्चा, १६. सुवृत्ततिलकः, १७. लोकप्रकाशकोशः, १८. नीतिकल्पतरुः, १९. व्यासाष्टकम् ।

अवदानकल्पलतायामस्य शैली प्रसादमयी । कथालेखने दक्षोऽयम् । अस्य कथा चरित्रप्रधाना । न च वृत्तप्रधानत्वं तत्र । हास्येऽस्य प्रगल्भता प्रशस्यतरा । भाषाऽस्य मधुरा, सरसा, सुबोधा, प्रवाहमयी । अनावश्यकचमत्कारप्रयासविमुखोऽयम् । जनताचरित्रचित्रणे पटुरयम् । शिष्टमौचित्यविचारचर्चाप्रसङ्गे द्रष्टव्यम् ।

( ५ ) **बिल्हणः**—राजकलशस्य पौत्रः ज्येष्ठकलशस्य पुत्रः मध्यमो बिल्हणः । माता चास्य नागदेवी । समयश्च एकादशख्रिष्टाब्दस्योत्तरार्धः इति श्री पं० बलदेवोपाध्यायाः । अयं कश्मीरे एव शिक्षितः । केसरस्य कवितायाश्चोत्पत्तिस्थानं कश्मीरदेश एवेति बिल्हणः ।

**रचनाः**—अस्य रचनात्रयमक्षिपथमायाति—१. विक्रमाङ्कदेवचरितम्, २. कर्णसुन्दरीनाटिका, ३. चौरपञ्चाशिका च । विक्रमाङ्कदेवचरितम्—महाकाव्यम् । वीररसस्यात्र प्रधानता । प्रकृतिचित्रणं मनोहरम् । चालुक्यवंशीयनृपतेर्विक्रमाङ्कदेवस्य चरित्रमत्र इतिहासदृष्टचा रुचिरम् । ब्रह्मणश्चुलुकादुत्पत्तेश्चालुक्यनामसार्थकता । आहवमल्लस्य पुत्रत्रये मध्यम एव काव्यनायकः चोलवंशजा चन्दलदेवी च नायिका । वसन्त-पुष्पावचय-सहस्नान-मधुपान-वर्षा-मृगयादीनां सुन्दरं चित्रमत्र वर्तते । भाषायाः प्राञ्जलता, सरलता स्पष्टता चात्रावलोकनीया । वैदर्भी विराजतेऽत्र ।

नाटिकायां शृङ्गारस्य पञ्चाशिकायां वियोगस्य प्राधान्यं निखिले भारते भ्रमन् कविः वृन्दावनं, मथुरां, प्रयागं, काशीं, सोमनाथादिकं चाजगाम । समयतस्तत् स्थानानि वर्णयति—

'यत्र स्त्रीणां मसृणघुसृणालेपनोष्णा कुचश्री-
स्ताः कस्तूरीपरिमलमुचः पट्टिका राङ्कवाणाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नौपृष्ठस्थाः शिशिरसमये ते वितस्ताजलान्तः
स्नानावासाः प्रचुरमपि च स्वर्गसौख्यं दिशन्ति ॥'

यथा च काश्याः—

'मन्दाकिन्याः पवनचटुलोत्तालवीचिदुकूल-
कूलोत्सङ्गे विरचितवतां योगनिद्रानियोगम् ।
शेषाः केषामपि परिणतौ वासरा पुण्यभाजां
शान्तस्वान्तःस्थितिगिरिसुतावल्लभानां प्रयान्ति ॥'

( ६ ) **कल्हणः**—अयं कश्मीरदेशवास्तव्यः आढ्यब्राह्मणवंशीयः राजसभास्थः । अस्य पिता चणपकः कश्मीरनृपतेः हर्षदेवस्य प्रधानामात्यः । पितुः स्थानं प्राप्तुं सक्षमोऽप्ययं राजसेवनं परित्यज्य लेखनं प्रारभत । जयसिंहस्य सुस्सलपुत्रस्य शासनकाले राजतरङ्गिणी नामकमितिहासग्रन्थं जग्रन्थ । ११४८ खिृटाब्दे समारभ्य ११५० खिृष्टाब्दे च समाप्तिवान् ।

राजतरङ्गिणी—कश्मीरदेशस्य राजनैतिकं भौगोलिकं सामाजिकं साहित्यिकमैतिहासिकं च विवरणमत्र दत्तम् । अष्टौ तरङ्गाश्चात्र सन्ति । ८१३ खिृष्टाब्दात् ११५० खिृष्टाब्दं यावद् वैज्ञानिकमितिहासोऽत्र मिलति । अस्मात् प्राग् यत्कथितं तत् कल्पनाप्रसूतमेव । नीलमतपुराणस्य नृपावलेः, पार्थिवालेः, शिलालेखानां, दानपत्राणां, प्रशस्तिपत्राणां चोपयोगोऽत्र विहितः । बौद्धशैवयोः शैववैष्णवयोः वर्णनमत्र निर्मत्सरं प्रशंसापूर्वं करोति कविः । सः कश्मीरजानां दोषानपि वदति परदेशजानां गुणानपि वर्णयति—

'श्लाघ्यः स एव गुणवान् रागद्वेषबहिष्कृता ।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती ॥'

इतिहासविवरणभूतेऽप्यस्मिन् ग्रन्थे काव्यशोभा दर्शनीया, भाषा सरला सरसा सुप्रबोधा । शैली च मनोहारिणी अलङ्काराणि यत्र तत्र विराजन्ते । यथा—

'योऽयं जनापकरणाय श्रयत्युपायं
तेनैव तस्य नियमेन भवेद् विनाशः
धूपं प्रसौति नयनान्ध्यकरं यमग्नि-
र्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव ॥'

( ७ ) **अमरूकः**—विजयते तत्रभवान् श्रृङ्गारमन्दराचलोऽमरूकः । अस्य श्लोका एव प्रबन्धायमाना इति समीक्षकप्रवराः । परं कुत्र कदा वाऽसौ जन्म

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लेभे ? कं जनकत्वेन भूषयति स्म ? का शारदाऽस्य मातेत्यादिकं सर्वं तिमिराच्छन्न-मेव । धन्येयं वाणी या रसिकरसनासु नर्तकीवाद्याऽपि नृत्यति । वक्तारं श्रोतारं च समाकर्षति हठात् । प्रबन्धकाव्यमलिखच्चेत् परिभाषाप्रकरणं लक्षणग्रन्थानां किञ्चिदन्यदिवाभविष्यत् ।

**अमरूकशतकम्**—अस्य महाकवेः काव्यं तन्नाम्नैव ख्यातम् । अत्र प्रति-श्लोकं शृङ्गारभागीरथी प्रवहति । यथा चानन्दवर्धनः—

मुक्तेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । यथा अमरू-कस्य कवेः मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमाणा प्रसिद्धा एव । शार्दूल-विक्रीडितमत्र वृत्तम् । भाषा समासरहिता स्वल्पसमासा वा । अलङ्काराः शृङ्गारपोषकाः । बहुभिरनुकृता अस्य श्लोकाः संस्कृतसाहित्ये प्रभाविशिष्टा एतादृशाः श्लोकाः सामान्येन न मिलन्ति—

'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥'

अर्जुनवर्मदेवस्य रसिकसञ्जीवनी वेमभूपालस्य शृङ्गारदीपिका चास्य टीकाः शोभनाः ।

**( ८ ) जयदेवः**—कविरयं लक्ष्मणसेनसभास्थः केन्दुबिल्वनिवासी च । श्रीकृष्णस्यायं भक्तः । संस्कृतस्य माधुर्यं सरलता चात्रैव द्रष्टुं शक्यते । भावानां सौष्ठवं भक्तेः सर्वोपरित्वं च दर्शं दर्शं कस्य मनो न मोदायते । कविः कोमल-कान्तपदावलेः पण्डितः । अस्य एका एव रचना गीतगोविन्दनाम्ना प्रसिद्धा ।

**गीतगोविन्दम्**—द्वादशसर्गात्मकमिदं काव्यं सर्वत्र गीत एव कविना गोविन्दः । उपमोत्प्रेक्षादयोऽलङ्काराश्चात्र बाहुल्येन दृश्यते । स्नेहस्योदात्तता-चित्रणे एव जयदेवस्य साफल्यम् । यथा—

'दृशौ तव मदालसे वदनमिन्दुसन्दीपकं
गतिर्जनमनोरमा विजितरम्भमूरुद्वयम् ।
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा-
वहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥'

श्लेषेण देवाङ्गनानिर्देशः मुद्रालङ्कारेण वृत्तनिर्देशः सहृदयानन्दाय एव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'वहति च वलितविलोचनजलभरमाननकमलमुदारम् ।
विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारम् ॥'

विरहिण्याः राधिकायाश्चित्रणे कविः कियान् सफल इति सुधीभिरूह्यमेव । इति ।

## लेखकस्य परिचयः

दुर्गालिङ्गितविग्रहो विजयते नारायणो मे पिता
भाषाकाव्यरसेश्वरी च जननी देवी यशोदा तथा ।
श्रीकृष्णो मणिरेव मे गुरुवरः पौराणिकेषूत्तमः
गर्गाचार्यकुलं बुधैर्विलसितं शास्त्रार्थसन्दीपितम् ॥ १ ॥
वेदव्यासप्रणीतबन्धशतकं दृष्ट्वा तृपेयुर्बुधा-
श्चेन्मन्ये सफलं परिश्रममहं विद्यार्थितोषेऽधिकम् ।
दोषाणामिह सूचनेऽधिकमहो स्नेहं सदा भावये
निर्दोषे सति गौरवं गुरुगणानामेव नो मादृशाम् ॥ २ ॥
आदौ सौप्रभलेखनं तदनु च कौमारसंग्रन्थनम्
काव्यं तापसनायकं तदनु च शोधप्रबन्धादिकम् ।
टीकाकार्यमतः परं हि शतकं वाणाब्धिखाक्षे कृतम्
सर्वेभ्योऽप्युपयोगि तत्त्वनिकरं चादाय छात्राय वै ॥ ३ ॥
आदायैव रसं करोति मधुरं पौष्पं सदा मक्षिका
तद्वद् पूर्वकृताद् गृहीतमिह वै सर्वं न वा मामकम् ।
न स्तेनो भवितास्मि भूमिवलये व्यक्तेः समाजस्य वै
साहित्यं खलु मुद्रितं भवति हि व्यक्तेः समाजाङ्किता ॥ ४ ॥
भिन्नं नाङ्गमिहाङ्गिनी न वदतः श्रोता न वा लेखकाद्
बोधे पाठक एव भक्तभगवन्मेलोपमं राजते ।
ऐक्यं मानसिकं विनाशनिपुणो भेदः सदा चोभयो-
र्भित्त्वा भित्तिमिमां सुमोदभरितो लोको विजयते सुखम् ॥ ५ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# श्रीसम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

## आचार्यपरीक्षायाम् १९८७ ई०

### तृतीयवर्षे

### साहित्यविषये चतुर्थं पत्रम्

समयः—घण्टात्रयम् सम्पूर्णाङ्काः—५०

१. अधोलिखितेषु कमप्येकमवलम्ब्य पृष्ठत्रयात्मको निबन्धो लेखनीयः—

( अ ) क इह रघुकारे न रमते ।

( आ ) औचित्यस्य विष्वग् व्याप्तिः ।

( इ ) नृत्यति काव्यं वृत्तचरणेषु ।

( ई ) प्रज्ञया प्रेक्षते विश्वं हस्तामलकवत् कविः ।

( उ ) प्रतिफलति कवीन्द्रः स्वस्य काव्येषु नित्यम् ।

३०

२. अधोलिखितेषु किमपि द्वयमाश्रित्य पर्य्यलोचनीयम्—

( क ) काव्योद्देश्यम् ।

( ख ) सारस्वत-विलासः ।

( ग ) उपमा कालिदासस्य ।

( घ ) वन्दे वाल्मीकि-कोकिलम् ।

( ङ ) प्रकृतिमधुरा भारविगिरः ।

( च ) बाणं तु सर्वेश्वरमानतोऽस्मि ।

२०

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## आचार्यपरीक्षायाम् १९८७ ई०

### तृतीयवर्षे

### साहित्यविषये पञ्चमं पत्रम्

समयः—घण्टात्रयम् सम्पूर्णाङ्काः—५०

सर्वे प्रश्नाः समानाङ्काः। अधोलिखितेषु केचन चत्वारः प्रश्नाः समाधेयाः।

१. काव्यकारणं समीक्ष्यताम्।
२. भासस्य नाटचनैपुण्यं समालोचनीयम्।
३. अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
४. असारे खलु संसारे कविरेकः प्रजापतिः।
५. रम्या रामायणीकथा।
६. संस्कृतकथासाहित्यं समीक्षणीयम्।
७. कानिचिच्चत्वारि चम्पूकाव्यानि परिचाययन्तु।
८. काव्ये व्यञ्जनाया महत्त्वं प्रतिपादयन्तु।
९. गद्यं कवीनां निकषं वदन्ति।
१०. नैषधं विद्वदौषधम्।
११. अभिनवगुप्तस्य रससिद्धान्तः।
१२. प्रतिभा।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

।। श्रीः।।

# साहित्यशास्त्रीयो निबन्धः

## लघ्वतिलघूत्तरीयाणि प्रश्नोत्तराणि

*****

००१. प्रश्नः- अलङ्कारशास्त्रस्य का उपयोगिता?
उत्तरम्- भाषायां व्युत्पतिविवर्धनाय यथा व्याकरणशास्त्रमपेक्ष्यते तथैव काव्ये नैपुण्यायालङ्कारशास्त्रस्यापि महती उपयोगिता वर्तते।

००२. प्रश्नः- भोजराजमतानुसारेण काव्यशास्त्रस्य प्रमुखं प्रयोजनं किम्?
उत्तरम्- काव्यशास्त्रस्य प्रमुखं प्रयोजनं भोजराजस्तावत् कान्तासम्मित-तयोपदेश-युजे इति मन्यते।

००३. प्रश्नः- काव्यशास्त्रे केषां तत्त्वानां निरूपणमस्ति?
उत्तरम्- काव्यस्य जीवनाधायकरसगुणाऽलङ्कारादीनां सर्वेषां तत्त्वानां विशदं निरूपणमलङ्कारशास्त्रे एव भवति।

००४. प्रश्नः- साहित्यशास्त्रस्य का व्युत्पत्तिः?
उत्तरम्- सहितं रसेन युक्तं विशिष्टं साहित्यम्, तस्य भावः साहित्यम्।

००५. प्रश्नः- अलङ्कारशास्त्रे के के सम्प्रदायाः प्रचलिताः सन्ति?
उत्तरम्- अलङ्कारशास्त्रे तावत् षट् सम्प्रदायाः प्रचलिताः; ते हि- १.रससम्प्रदायः, २.अलङ्कारसम्प्रदायः, ३.रीतिसम्प्रदायः, ४.ध्वनिसम्प्रदायः, ५.वक्रोक्तिसम्प्रदायः, ६.औचित्यसम्प्रदायश्चेति। सम्प्रदायप्रवर्तकास्तु क्रमशः १.भरतः, २.भामहः, ३.वामनः, ४.आन्दन्दवर्धनः, ५.कुन्तकः, ६.क्षेमेन्द्रश्च।

००६. प्रश्नः- ऋग्वेदे रसशब्देन कस्योल्लेखं कृतं दृश्यते?
उत्तरम्- 'दधानः कलशे रसम्' इति सोमरसस्यार्थे। आनन्दार्थेऽपि- 'रसो वै सः'।

००७. प्रश्नः- अलङ्कारशास्त्रे सम्प्रत्युपलब्धः भरतस्य रससिद्धान्तः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमस्ति?

उत्तरम्– 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति रसस्वरूपनिर्णायकत्वेन प्रसिद्धं भरतमुनिप्रतिपादितसिद्धान्तम्।

००८. प्रश्नः– उत्पत्तिवादः कस्य मतमस्ति?

उत्तरम्– भट्टलोल्लटस्य।

००९. प्रश्नः– अनुमितिवादः कस्य मतमस्ति?

उत्तरम्– श्रीशङ्कुकस्य।

०१०. प्रश्नः– रसविषये भुक्तिवादः कस्य मतम्?

उत्तरम्– भुक्तिवादः रसविषये भट्टनायकस्य मतमस्ति।

०११. प्रश्नः– अभिव्यक्तिवादस्याविष्कर्त्ता कोऽस्ति?

उत्तरम्– रसविषयकभरतसूत्रस्य व्याख्यानविषयेऽभिव्यक्तिवादस्याविष्कर्त्ताऽऽचार्यः अभिनवगुप्तः वर्त्तते।

०१२. प्रश्नः– वैदिकसाहित्ये केषामलङ्काराणामुल्लेखो दृश्यते?

उत्तरम्– वैदिकसाहित्ये उपमारूपकाद्यलङ्काराणामुल्लेखो दृश्यते।

०१३. प्रश्नः– अलङ्काराणां विधिवन्निरूपणमलङ्कारशास्त्रे सर्वप्रथमं केन कृतम्?

उत्तरम्– अलङ्कारशास्त्रेऽलङ्काराणां सर्वप्रथमं विधिवन्निरूपणमाचार्यभरतमुनिना स्वकीये नाट्यशास्त्रे कृतं दृश्यते।

०१४. प्रश्नः– नाट्यशास्त्रे भरतमुनिनाऽलङ्काराणां कति भेदाः दर्शिताः?

उत्तरम्– अलङ्काराणां निरूपणप्रसङ्गे भरतमुनिना उक्तं यत्–

उपमा रूपकं चैव दीपकं यमकं तथा।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।।

०१५. प्रश्नः– रीतिसम्प्रदायस्य प्रस्थापनपरमाचार्यः कः?

उत्तरम्– रीतिसम्प्रदायस्य प्रस्थापनपरमाचार्यः आचार्यो वामनः अस्ति।

०१६. प्रश्नः– वामनाचार्यस्य मते काव्यस्य किं स्वरूपम्?

उत्तरम्– 'रीतिरात्मा काव्यस्य'।

०१७. प्रश्नः– वामनमते कति रीतयः के च ते?

उत्तरम्– आचार्यवामनमते वैदर्भी, गौड़ी, पाञ्चाली, लाटीति चतुःसङ्ख्याकाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रीतयः वर्त्तन्ते।

०१८. प्रश्नः- वक्रोक्तिसम्प्रदायस्य प्रतिपादकः आचार्यः कः?
उत्तरम्- ऐतिहासिक्या दृष्ट्या सर्वप्रथमं वक्रोक्तेः कल्पनां भामहः अकरोत्; इयमेव लोचनकारानुसारेण काव्यस्य जीवितत्त्वेनोक्ता। वामनानुसारं वक्रोक्तिः एकोऽर्थाऽलङ्कारोऽस्ति। परन्तु 'वक्रोक्तिरेव काव्यजीवितम्' इत्यस्योद्घोषकः आचार्यकुन्तकः आसीत्। अनेनाचार्येण वक्रोक्तिप्रतिपादनार्थं 'वक्रोक्तिजीवितम्' इत्येतं ग्रन्थं रचितवान्।

०१९. प्रश्नः- कुन्तकमतेन वक्रोक्तेः किं स्वरूपम्?
उत्तरम्- वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते'।

०२०. प्रश्नः- वक्रोक्तिशब्दस्य कोऽर्थः?
उत्तरम्- सर्वसाधारणजनकथनभिन्नाऽलौकिकचमत्कारयुक्ता उक्तिः वक्रोक्तिः।

०२१. प्रश्नः- ध्वनिसम्प्रदायस्य किं स्वरूपं तस्य प्रतिपादकश्च कः?
उत्तरम्- ध्वनिसम्प्रदायं प्रवर्त्तमानः आचार्यानन्दवर्धनेन ध्वनेरावश्यकता-मनुभूय ध्वनिसम्प्रदायं प्रवर्त्तितः।

०२२. प्रश्नः- औचित्यसम्प्रदायस्य संस्थापकाचार्यः कः?
उत्तरम्- औचित्यसम्प्रदायस्य संस्थापकाचार्यः आचार्यक्षेमेन्द्रः।

०२३. प्रश्नः- संस्कृतकाव्यशास्त्रस्य प्राचीनतमं नाम किम्?
उत्तरम्- संस्कृतकाव्यशास्त्रस्य प्राचीनतमं नाम काव्यालङ्कारोऽस्ति।

०२४. प्रश्नः- वक्रोक्तिसम्प्रदायप्रवर्त्तकेनाचार्येण कुन्तकेन किमभिहितम्?
उत्तरम्- 'वक्रोक्तिरेव काव्यजीवितम्'।

०२५. प्रश्नः- काव्यशास्त्रे प्रतिपाद्यमानः प्रथमो विषयः कः?
उत्तरम्- काव्यशास्त्रे प्रतिपाद्यमानः प्रथमो विषयः काव्यप्रयोजनमस्ति।

०२६. प्रश्नः- कविराजविश्वनाथमते काव्यस्य किं स्वरूपम्?
उत्तरम्- 'वाक्यं रसात्मकं काव्यम्'।

०२७. प्रश्नः- पण्डितराजजगन्नाथमते काव्यस्य किं स्वरूपम्?
उत्तरम्- 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'।

०२८. प्रश्नः- काव्यप्रकाशकर्तुराचार्यमम्मटमते काव्यस्य किं लक्षणम्?
उत्तरम्- 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन क्वाऽपि'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

०२९. प्रश्न- आचार्यदण्डिना काव्यस्य किं स्वरूपं प्रतिपादितम्?
उत्तरम्- 'इष्टार्थव्यवच्छिन्ना पदावलिः काव्यम्'।

०३०. प्रश्नः- भोजराजस्य लक्षणग्रन्थः कः?
उत्तरम्- सरस्वतीकण्ठाभरणम्।

०३१. प्रश्नः- भोजराजमते काव्यस्य किं स्वरूपम्?
उत्तरम्- निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसात्मकं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ।।

०३२. प्रश्नः- जयदेवस्य लक्षणग्रन्थः कः?
उत्तरम्- चन्द्रालोकः।

०३३. प्रश्नः- जयदेवस्य मते काव्यस्य किं स्वरूपम्?
उत्तरम्- निर्दोषा लक्षणवती सरीतिर्गुणभूषिता ।
सालङ्काररसानेकवृत्तिर्वाक्काव्यनामभाक् ।।

०३४. प्रश्नः- शब्दार्थौ सहितौ काव्यमिति काव्यलक्षणं कस्य-कस्य मतेऽस्ति?
उत्तरम्- भामहः, उद्भटः, रुद्रटादयः।

०३५. प्रश्नः- कुन्तकस्य कः लक्षणग्रन्थः?
उत्तरम्- वक्रोक्तिजीवितम्।

०३६. प्रश्नः- काव्यस्य किं स्वरूपं कुन्तकमते?
उत्तरम्- शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्ये तद्विदाह्लादकारिणी ।।

०३७. प्रश्नः- क्षेमेन्द्रमते काव्यस्य किं स्वरूपम्?
उत्तरम्- औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ।

०३८. प्रश्नः- ध्वन्यालोककारमते काव्यस्यात्मा कः?
उत्तरम्- काव्यस्यात्मा ध्वनिः।

०३९. प्रश्नः- काव्यादर्शे काव्यस्य किं स्वरूपमुक्तम् ?
उत्तरम्- तैः शरीरञ्च काव्यानामलङ्काराश्च दर्शिताः।
शरीरं तावदिष्टार्थं व्यवच्छिन्ना पदावली ।।

०४०. प्रश्नः- अलङ्कारशेखरः कस्य रचना?
उत्तरम्- शौद्धोदनेः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

०४१. प्रश्नः- शौद्धोदनिमते काव्यस्य किं स्वरूपम्?
उत्तरम्- काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत् ।

०४२. प्रश्नः- वाग्भट्टकृतकाव्यानुशासने काव्यस्य किं स्वरूपम्?
उत्तरम्- साधुशब्दार्थं गुणालङ्कारभूषितम् ।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ।।

०४३. प्रश्नः- वामनमते काव्यस्य किं स्वरूपम्?
उत्तरम्- काव्यशब्दो गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते ।

०४४. प्रश्नः- भामहमते काव्यस्य किं लक्षणम्?
उत्तरम्- शब्दार्थौ सहितौ काव्यम् ।

०४५. प्रश्नः- स्थायिभावानां किं परिचयम्?
उत्तरम्- विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायिभावाः प्रकीर्तिताः ।।
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः ।।

०४६. प्रश्नः- स्थायिभावानां सङ्ख्यां स्पष्टयत?
उत्तरम्- रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयश्चेति निर्वेदो नवमस्तथा ।।

०४७. प्रश्नः- नाट्यशास्त्रप्रणेतुः भरतमुनेः मतेन रसः कतिविधः?
उत्तरम्- शृङ्गार-हास्य-करुण-रौद्र- वीर- भयानकाः ।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।।

०४८. प्रश्नः- मम्मटमते अतिरिक्तोऽन्यः स्वीकृत रसः कः?
उत्तरम्- निर्वेदः स्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

०४९. प्रश्नः- भामहमते अलङ्कारस्य किं स्वरूपम्?
उत्तरम्- न कान्तमपि निर्भूषं विभाति वनिताननम् ।

०५०. प्रश्नः- चन्द्रालोके अलङ्कारस्य किं स्वरूपमुक्तम्?
उत्तरम्- अलङ्करोति यः काव्यं शब्दार्थावनलङ्कृती ।
असौ न मन्यते कस्मादनुष्णमलङ्कृती ।।

०५१. प्रश्नः- नाट्यशास्त्रे केषामलङ्काराणामुल्लेखो दृश्यते?
उत्तरम्- उपमा रूपकं चैव दीपकं यमकं तथा ।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयः ।।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

०५२. प्रश्नः- साहित्यदर्पणकर्तुर्विश्वनाथमते दशमो रसः कः?
उत्तरम्- वात्सल्यरसः।

०५३. प्रश्नः- वामनाचार्यमते रीतेरर्थः कः?
उत्तरम्- विशिष्टपदरचना रीतिः ।

०५४. प्रश्नः- अलङ्कारशास्त्रस्येतिहासं कतिशषु भागेषु विभक्तः?
उत्तरम्- चतुर्षु भागेषु विभक्तः ।

०५५. प्रश्नः- 'माघे सन्ति त्रयो गुणाः' सूक्तिः कस्योपरि लिखिता वर्तते?
उत्तरम्- शिशुपालवधस्य प्रणेतुः माघस्योपरि ।

०५६. प्रश्नः- अलङ्कारशास्त्रस्य प्रारम्भिकः कालः कः?
उत्तरम्- वैदिककालादारभ्य भामहपूर्वकालः ।

०५७. प्रश्नः- अलङ्कारशास्त्रस्य रचनाकालः कः?
उत्तरम्- आचार्यभामहादारभ्यानन्दवर्धनाचार्यपूर्वकालः ।

०५८. प्रश्नः- अलङ्कारशास्त्रस्य निर्णयात्मकः कालः कः?
उत्तरम्- आनन्दवर्धनाचार्यादारभ्य मम्मटान्तकालः ।

०५९. प्रश्नः- अलङ्कारशास्त्रस्य व्याख्यात्मकः कालः कः?
उत्तरम्- आचार्यमम्मटादारभ्य विश्वेश्वरपाण्डेयपर्यन्तम् ।

०६०. प्रश्नः- अलङ्कारशास्त्रस्य प्रवर्त्तकः कः प्रमुखः आचार्यः?
उत्तरम्- प्राचीनतमाचार्येषु प्रमुखः नाट्यशास्त्रस्य प्रणेता भरतमुनिः ।

०६१. प्रश्नः- अलङ्कारशास्त्रस्य रचनाकालीनाः प्रमुखा आचार्याः के सन्ति?
उत्तरम्- भामहः, दण्डी, उद्भटः, रुद्रटश्च ।

०६२. प्रश्नः- अलङ्कारशास्त्रस्य निर्णयात्मककालीनः प्रमुखः आचार्यः कः?
उत्तरम्- काव्यप्रकाशकारः आचार्यमम्मटः ।

०६३. प्रश्नः- अलङ्कारशास्त्रस्य व्याख्यात्मककालीनाः प्रमुखा आचार्याः के सन्ति?
उत्तरम्- विश्वनाथ-जयदेव-अप्पयदीक्षित-जगन्नाथ-विश्वेश्वरपाण्डेयादयः।

०६४. प्रश्नः- काव्यप्रकाशकर्तुराचार्यमम्मटः कस्य पुत्रः?
उत्तरम्- आचार्यजैयटस्य ।

०६५. प्रश्नः- मम्मटस्य जन्मस्थान कुत्र आसीत्?
उत्तरम्- काश्मीरः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

०६६. प्रश्नः- शिशुपालवधमहाकाव्यस्य प्रणेता कः?
उत्तरम्- महाकविमाघः।

०६७. प्रश्नः- नैषधीयचरितस्य प्रणेता कः?
उत्तरम्- महाकविश्रीहर्षः।

०६८. प्रश्नः- नैषधीयचरितप्रणेतुः श्रीहर्षस्य पिता कः?
उत्तरम्- श्रीहीरः।

०६९. प्रश्नः- किरातार्जुनीयमहाकाव्यस्य प्रणेता कः?
उत्तरम्- महाकविभारविः।

०७०. प्रश्नः- अलङ्कृतशैल्यां गद्यकाव्यस्य प्रथमो लेखकः कः?
उत्तरम्- वासवदत्ताप्रणेता सुबन्धुः।

०७१. प्रश्नः- सर्वासां भाषाणां जननी का?
उत्तरम्- सर्वासां भाषाणां जननी संस्कृतभाषा ।

०७२. प्रश्नः- हर्षचरितस्य लेखकः कः?
उत्तरम्- महाकविबाणभट्टः।

०७३. प्रश्नः- महाकविबाणभट्टस्य गद्यकाव्यात्मकः प्रमुखः ग्रन्थः कः?
उत्तरम्- कादम्बरी।

०७४. प्रश्नः- दण्डिनः कति कृतयः?
उत्तरम्- काव्यादर्शम्, दशकुमारचरितम्, अवन्तिसुन्दरीकथा चेति त्रयः कृतयः।

०७५. प्रश्नः- मुद्राराक्षसस्य प्रणेता कः?
उत्तरम्- विशाखदत्तः।

०७६. प्रश्नः- खण्डकाव्यमेघदूतस्य प्रणेता कः?
उत्तरम्- महाकविकालिदासः।

०७७. प्रश्नः- प्रसन्नराघवस्य रचयिता कः?
उत्तरम्- श्रीजयदेवः।

०७८. प्रश्नः- बालरामायणस्य रचयिता कः?
उत्तरम्- श्रीराजशेखरः।

०७९. प्रश्नः- वेणीसंहारनाटकस्य प्रणेता कः?
उत्तरम्- भट्टनारायणः।

०८०.प्रश्नः- महाकविशूद्रकस्य कः नाटकः?

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्तरम्- मृच्छकटिकम्।

०८१. प्रश्नः- ध्वन्यालोकग्रन्थस्य प्रणेता कः?
उत्तरम्- आचार्यानन्दवर्धनः।

०८२. प्रश्नः- दशरूपकस्य प्रणेता कः?
उत्तरम्- आचार्यधनञ्जयः।

०८३. प्रश्नः- व्यक्तिविवेकस्य प्रणेता कः?
उत्तरम्- महिमभट्टः।

०८४. प्रश्नः- काव्यप्रकाशस्य प्रणेता कः?
उत्तरम्- आचार्यमम्मटः।

०८५. प्रश्नः- हेमचन्द्रस्य काव्यग्रन्थः कः?
उत्तरम्- काव्यानुशासनम्।

०८६. प्रश्नः- शारदातनयस्य ग्रन्थस्य किं नाम?
उत्तरम्- भावप्रकाशनम् ।

०८७. प्रश्नः- अप्पयदीक्षितस्य कः कः ग्रन्थः वर्त्तते?
उत्तरम्- अप्पयदीक्षितस्य त्रयो ग्रन्थाः सन्ति- कुवलयानन्दः, चित्रमीमांसा वृत्तिवार्तिकश्चेति।

०८८. प्रश्नः- रसगङ्गाधरस्य प्रणेता कः?
उत्तरम्-पण्डितराजजगन्नाथः।

०८९. प्रश्नः- साहित्यदर्पणस्य प्रणेता कः?
उत्तरम्- कविराजविश्वनाथः।

०९०. प्रश्नः- औचित्यविचारचर्चानाम्नः ग्रन्थस्य प्रणेता कः?
उत्तरम्- क्षेमेन्द्रः।

०९१. प्रश्नः- काव्यस्यात्मा ध्वनिरिति कस्याचार्यस्य सिद्धान्तः?
उत्तरम्- आनन्दवर्धनाचार्यस्य ।

०९२. प्रश्नः- चन्द्रालोकस्य रचयिता कः?
उत्तरम्- आचार्यजयदेवः।

०९३. प्रश्नः- मम्मटमतानुसारेण उत्तमकाव्यस्य किं स्वरूपम्?
उत्तरम्- इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।

०९४. प्रश्नः- मम्मटमते मध्यमंकाव्यस्य किं स्वरूपम्?

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्तरम्- अतादृशि वाच्यादनतिशायिनि व्यङ्ग्ये सति मध्यमं काव्यमुच्यते।

०९५. प्रश्नः- साहित्यदर्पणमते वाक्यस्य किं स्वरूपम्?
उत्तरम्- वाक्यं स्याद्योग्यताकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः ।

०९६. प्रश्नः- लक्षणायाः कति भेदाः?
उत्तरम्- लक्षणायाः षड् भेदाः ।

०९७. प्रश्नः- महाकाव्यस्य किं स्वरूपम्?
उत्तरम्- सर्गैरवान्तरार्थवर्णैरुपलक्षितो बन्धः रसवत्पद्यकदम्बविन्यासो महा-काव्यम्।

०९८. प्रश्नः- खण्डकाव्यस्य किं स्वरूपम्?
उत्तरम्- खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च।

०९९. प्रश्नः- विश्वनाथमते गद्यकाव्यस्य किं स्वरूपम्?
उत्तरम्- वृत्तस्य गन्धेन रहितं श्रव्यकाव्यं गद्यम् ।

१००. प्रश्नः- कथायाः किं स्वरूपम्?
उत्तरम्- कथा सरसवस्तुनिबन्धनं ।

१०१. प्रश्नः- चम्पूकाव्यस्य किं स्वरूपम्?
उत्तरम्- गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।

१०२. प्रश्नः- दोपस्य किं स्वरूपम्?
उत्तरम्- रसापकर्षका दोषाः।

१०३. प्रश्नः- मुख्यार्थहतिदोषाः कति?
उत्तरम्- मुख्यार्थहतिदोषाः पञ्चप्रकारकाः भवन्ति- पदे, पदांशे, वाक्ये, अर्थे, रसे चेति। उक्तञ्च-

पदे पदांशे वाक्यर्थे सम्भवन्ति रसेऽपि यत्।

१०४. प्रश्नः- पददोषाः कति के च ते?
उत्तरम्- पददोषाः षोडशसङ्ख्याकाः भवन्ति; ते च दुःश्रवत्वम्, व्रीड़ाश्ली-लता, जुगुप्साश्लीलता, अमङ्गलाश्लीलता, अनुचितार्थता, अप्रयुक्तता, ग्राम्यता, अप्रतीतता, सन्दिग्धता, नेयार्थता, निहतार्थता, अवाचकत्वम्, क्लिष्टत्वम्, विरुद्धमतिकारिता, अविमृष्टविधेयांशता, निरर्थकता चेति।

१०५. प्रश्नः- वक्रोक्तिः कतिविधा?
उत्तरम्- वक्रोक्तिः षड्विधा- वर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, प्रत्य-याश्रितवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता चेति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१०६. प्रश्नः- अर्थदोषाः कति के च ते?

उत्तरम्- अर्थदोषाः त्रयोविंशतिसङ्ख्याकाः भवन्ति; तथाहि-

अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टता ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धता ॥
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकांक्षता सहचरभिन्नताऽस्थानयुक्तता ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा ॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्तिताः ॥

१०७. प्रश्नः- गुणीभूतव्यङ्ग्यस्य कति भेदाः?

उत्तरम्- गुणीभूतव्यङ्ग्यस्याष्टौ भेदाः भवन्ति; ते हि अगूढ़म्, अपरस्याङ्गम्, वाच्यसिद्ध्यङ्गम्, अस्फुटम्, सन्दिग्धप्राधान्यम्, तुल्यप्राधान्यम्, काक्वाक्षिप्तम्, असुन्दरश्चेति।

१०८. प्रश्नः- गुणाः के?

उत्तरम्- ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥

१०९. प्रश्नः- श्लेषालङ्कारस्य किं स्वरूपम्?

उत्तरम्- श्लिष्टैः पदैरनेकार्थाऽभिधाने श्लेष इष्यते।

११०. प्रश्नः- श्लेषस्य कति भेदाः?

उत्तरम्- श्लेषस्य अष्टौ भेदाः।

१११. प्रश्नः- कव्यमीमांसा कस्याचार्यस्य ग्रन्थः?

उत्तरम्- काव्यमीमांसाऽऽचार्यराजशेखरस्य ग्रन्थः ।

११२. प्रश्नः- काव्यमीमांसा कीदृशो ग्रन्थः?

उत्तरम्- काव्यमीमांसाऽऽचार्यत्वसाधको ग्रन्थः ।

११३. प्रश्नः- गद्यसाहित्यस्योपजीव्यः कः?

उत्तरम्- गद्यसाहित्यस्योपजीव्यः कृष्णयजुर्वेदस्य तैत्तिरीयसंहिता वर्तते।

११४. प्रश्नः- महाकविकालिदासस्य कति रचनाः सन्ति?

उत्तरम्- काव्यचतुष्टयं, नाटकत्रयं च कालिदासेन रचितम्।

११५. प्रश्नः- कुमारसम्भवे कति सर्गाः सन्ति?

उत्तरम्- अष्टादशसर्गाः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

११६. प्रश्नः- रघुवंशः कति सर्गात्मकः?
उत्तरम्- एकोनविंशसर्गात्मकः।

११७. प्रश्नः- कालिदासस्य प्रियः रसः कः?
उत्तरम्- शृङ्गारः।

११८. प्रश्नः- कालिदासस्य प्रियः अलङ्कारः कः?
उत्तरम्- उपमा।

११९. प्रश्नः- बुद्धचरितस्य प्रणेता कः?
उत्तरम्- अश्वघोषः।

१२०. प्रश्नः- शारिपुत्रप्रकरणस्य प्रणेता कः?
उत्तरम्- अश्वघोषः।

१२१. प्रश्नः- बौद्धदार्शिनकः कवि कः?
उत्तरम्- अश्वघोषः।

१२२. प्रश्नः- करुणरसप्रधाननाटकः कः?
उत्तरम्- उत्तररामचरितम्।

१२३. प्रश्नः- उत्तररामचरितस्य प्रणेता कः?
उत्तरम्- भवभूतिः।

१२४. प्रश्नः- मालतीमाधवस्य रचयिता कः?
उत्तरम्- भवभूतिः।

१२५. प्रश्नः- महावीरचरितस्य प्रणेता कः?
उत्तरम्- भवभूतिः।

१२६. प्रश्नः- कारुण्यस्य आचार्यः कः?
उत्तरम्- भवभूतिः।

१२७. प्रश्नः- वासवदत्तायाः प्रणेता कः?
उत्तरम्- सुबन्धुः।

१२८. प्रश्नः- दशकुमारचरितं कस्य रचनाऽस्ति?
उत्तरम्- महाकविदण्डी।

१२९. प्रश्नः- दण्डिप्रणीतः लक्षणग्रन्थः कः?
उत्तरम्- काव्यादर्शः।

१३०. प्रश्नः- संस्कृतसाहित्यस्य आद्यः कविः कः?
उत्तरम्- महर्षिवाल्मीकिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## लघूत्तरीयाणि प्रश्नोत्तराणि

**०१.प्रश्नः- अलङ्कारशास्त्रस्योत्पत्तिविषयकः मूलग्रन्थः कः ?**

उत्तरम्- आर्यजातेः मूलग्रन्थः ऋग्वेदो मन्यते। पुरा महर्षिर्विश्वामित्रः स्वानुयायिभिः सह शतद्रुविपाशानद्योः सङ्गमेऽगच्छत्। तत्र तस्य हृदि तयोः नद्योरुच्छ्वसितं जलमवलोक्य भावोद्रेको जातः, यः सहसा काव्यत्वेन प्रवाहितः। उक्तञ्च ऋग्वेदे ( ३-३३-१ )-

प्रपर्वतानामुशती उपस्थादश्वे इदं विषिते हासमाने ।
गावेव शुभ्रे मातरारिहाणे विपाट्छुतुद्री पयसा जवेते ।।

अत्र 'गावेव' इत्यत्रोपमालङ्कारस्य चमत्कारिता दृश्यते।

**०२.प्रश्नः- अलङ्कारशास्त्रस्य प्रवर्त्तकः प्रमुखः आचार्यः कः?**

उत्तरम्- अलङ्कारशास्त्रप्रवर्तकेषु प्राचीनतमाचार्येषु प्रमुखः आचार्यः नाट्यशास्त्रप्रणेता भरतमुनिः । यद्यपि तस्य नाट्यशास्त्रे प्राधान्येन नाट्यस्य रचना, अभिनयादीनामेव वर्णनमस्ति, तथापि रस-गुणरीत्यलङ्कारादीनामपि तत्र समीचीनं विवेचनं प्राप्यते। एष एवाचार्यः सर्वप्रथमं काव्याङ्गानां साङ्गोपाङ्गं वर्णनं काव्यतत्त्वानां नियमनिर्धारणञ्चाकरोत् । तस्य महत्त्वं न केवलं भारतीयाः विद्वांसः; अपितु पाश्चात्याः विद्वांसः डॉ. स्कॉटजेम्सप्रभृतयोऽपि मन्यन्ते ।

**०३.प्रश्नः- प्रादुर्भूतसमयनिर्धारणं कृत्वाऽऽलङ्कारिकेषु आचार्यभामहस्य स्थानं प्रदर्शयत?**

उत्तरम्- आचार्यभामहः अलङ्कारशास्त्रस्य याथार्थिकः प्रथमः आचार्यः । एवमनुमीयते यदाचार्यभामहः खृष्टीयचतुर्थशताब्दिपश्चाद्बभूवेति । संस्कृत काव्यशास्त्रे भामहस्याति-महत्त्वपूर्णं स्थानमस्ति । नाट्यशास्त्रप्रणेतुः भरतमुनेरनन्तरमयमेवा-लङ्कारशास्त्रस्य प्रथमः आचार्यः । भामहेनैव सर्वप्रथमं 'शब्दार्थौ काव्यम्' इति काव्यस्वरूपं काव्यालङ्कारे स्वीकृतम् । अनेन विस्तरेण स्वग्रन्थे गुणालङ्कारादीनां विवेचनं कृतम् ।

**०४.प्रश्नः- अलङ्कारशास्त्रेतिहासस्य रचनाकालीनाः के के प्रमुखाः आलङ्कारिकाः आचार्याः अभूवन्निति स्पष्टयत?**

उत्तरम्- कालस्यास्य प्रथम आचार्यः भामहः; तत्पश्चादलङ्कारशास्त्रस्येतिहासे आचार्यो दण्डी महत्त्वपूर्णं स्थानमावहति । दण्डिनः त्रयो ग्रन्थाः प्रसिद्धाः- १. काव्यादर्शः, २. दशकुमारचरितम्, ३. अवन्तिसुन्दरी कथा चेति । तदनन्तर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुद्भटस्य प्रादुर्भावो दृश्यते। एतस्य तिस्रः कृतय एव सम्प्रति समुपलब्धाः भवन्ति। तेषु प्रथमत्वेन स्वीकृतः अलङ्कारसारसंग्रहः आलङ्कारिको ग्रन्थः। तत्पश्चात् वामन-रुद्रट-रुद्रभट्टादीनां प्रादुर्भावो दृश्यते।

०५.प्रश्नः- आचार्यवामनस्य परिचयो देयः?

उत्तरम्- कश्मीरदेशवास्तव्यो वामनः जयापीडनृपतेः राजसभायाः सदस्यो मन्त्री वाप्यासीत्। असौ दण्डनीतेः, व्याकरणस्य, काव्यशास्त्रस्य च महापण्डित आसीत्। वामनः स्वकीयां काव्यालङ्कारसूत्रवृत्तिं पञ्चाधिकरणेषु विभज्य द्वादशाध्यायेषु पुनर्विभक्तमकरोत्। ग्रन्थेऽस्मिन् ३१९. सूत्राणि २५०. उदाहरणानि च सन्ति। वामनस्य मतानुसारं काव्यशोभाकराः धर्माः गुणाः; तदतिशयहेतवस्त्वलङ्काराः भवन्ति। स्वस्य स्वतन्त्रवैशिष्ट्येन सः वक्रोक्तिमर्थालङ्कारममन्यत। सः मुख्यालङ्कारत्वेन उपमायाः स्थानं निर्धार्य शेषालङ्काराणां स्वीकरणमुपमाप्रपञ्चत्वेन कृतम्। उक्तञ्च-

प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः।

०६.प्रश्नः- रुद्रटस्य परिचयो देयः?

उत्तरम्- आचार्यरुद्रटस्याभिधानेन समालोचकाः अस्य जन्मस्थानं कश्मीरं मन्यन्ते। किञ्च तज्जीवनवृत्तविषयकं न क्वापि किमपि मिलति। अस्य एकमात्रमुपलब्धः आलङ्कारिको ग्रन्थः काव्यालङ्कारोऽस्ति। षोडशाध्यायात्मकः काव्यालङ्कारनामकोऽयं ग्रन्थः ७३४ आर्याछन्दांसि धरति। एष एव प्रथम आलङ्कारिक आचार्यः यः अलङ्काराणां प्रस्तुतिः वर्गीकरणाधारेणाकरोत्। काव्यमीमांसाप्रणेता राजशेखरः स्वकीये ग्रन्थे रुद्रटमतमुदाहृतवान् परं ध्वनिकार आनन्दवर्धनः रुद्रटस्य क्वापि नामोल्लेखं नैवाकरोत्। इत्थमस्य कालो नूनमेव आनन्दवर्धनाचार्यात् पश्चात् राजशेखरस्य च प्राक नवमशताब्द्युत्तरार्धं एव सिध्यतीति।

०७.प्रश्नः- आनन्दवर्धनाचार्यस्य परिचयो देयः?

उत्तरम्- ध्वनिकारः आनन्दवर्धनाचार्यः व्याकरणशास्त्रे यथा पाणिनिः वेदान्ते च यथा शङ्करस्तथैवातिमहत्त्वपूर्णं स्थानमावहति। ध्वन्यालोककारः आनन्दवर्धनाचार्यः कश्मीरदेशवासी, सुकविः, समालोचकः प्रसिद्धो दार्शनिकश्चासीत्। अस्य जीवन-वृत्तविषये न किमप्यैतिह्यं तथ्यमुपलभ्यते। तथापि समुपलब्धप्रमाणैर्निश्चीयते यदाचार्यानन्दवर्णनः नूनमेव नवमशताब्द्याः पूर्वार्द्धतः पश्चादेवाभवत्। अनेन रचितो 'ध्वन्यालोक'नामको ग्रन्थः काव्यशास्त्रस्य सुप्रसिद्धो ग्रन्थोऽस्ति। देवीशतकम्, विषमबाणलीला, अर्जुनचरितम् अस्य त्रीणि काव्यानि सन्ति। दर्शनशास्त्रस्य तत्त्वालोकस्त्वस्य मौलिको ग्रन्थः विद्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**०८.प्रश्नः- काव्यमीमांसाप्रणेतुराचार्यराजशेखरस्य परिचयो देयः?**

उत्तरम्- कव्यमीमांसाशास्त्रस्य रचयिता राजशेखरः कन्नौजस्य प्रतीहारवंशीय-भूपतेः महेन्द्रपालस्यय तत्सूनो महीपालस्य च गुरुरासीत् । आचार्यराजशेखरस्य समयः समुपलब्धप्रमाणपर्यालोचनेन ८०० खृष्टीयाब्दतः ९२० खृष्टीयाब्दपर्यन्तमेव प्रतीयते । काव्यमीमांसाभिधायकोऽस्य अलङ्कारशास्त्रीयो ग्रन्थः । एतदतिरिक्तमस्य रचितानि रूपकाण्यपि सन्ति; ते हिं विद्धशालभञ्जिका, कर्पूरमञ्जरी, बालरामायणम्, बालभारतश्चेति । हरविलासश्चानेन प्रणीतं महाकाव्यम् । अष्टादशाध्यायेषु विभक्तः अस्य काव्यालङ्कारग्रन्थः विविधविषयज्ञानप्रदः कोषः अस्ति ।

**०९.प्रश्नः- आचार्यकुन्तकस्य रचनायां परिचयं ददतु?**

उत्तरम्- सम्प्रत्याचार्यकुन्तकस्य केवलमुपलब्धा कृतिः 'वक्रोक्तिजीवितम्' उन्मेष-चतुष्टयं काव्यक्षेत्रे सुप्रसिद्धा, यत्र वक्रोक्त्यलङ्कार एव सर्वेषामलङ्काराणां निवेशं कृत्वा तामेव काव्यस्यात्मानमकथयत् । ग्रन्थस्यास्य विभागाः कारिका, वृत्तिः, उदाहरणञ्चेति । एष कारिकावृत्तिभागावाचार्यकुन्तकरचितावुदाहाणानिच सुप्रसिद्धकभ्यः ग्रन्थेभ्यः गृहीतानि सन्ति । अयं हि स्वभावोक्त्यलङ्कारस्य खण्डनमकरोत्। तथाहि–

> अलङ्कारकृता येषां स्वभावोक्तिरलंकृतिः ।
> अलङ्कार्यतया तेषां किमन्यदवतिष्ठति ।।

**१०.प्रश्नः- कविभोजराजस्यालङ्कारिकग्रन्थस्य परिचयं ददतु?**

उत्तरम्- संस्कृतसाहित्यक्षेत्रे भोजः सुप्रसिद्धः कविः प्रकाण्डपण्डितः विविधज्ञः विदुषामाश्रयदाता, इति विभिन्नरूपैः ख्यातोऽस्ति। परमारवंशीयोऽयं सिन्धुलसूनुः मुञ्जस्य च भातृव्य आसीत्। यद्यपि भोजराजेन रचिताः व्याकरण-ज्योतिष-दर्शनायुर्वेदप्रभृतिषु विषयेषु चतुरशीतिसंख्याकाः ग्रन्थाः श्रूयन्ते; तथाप्यलङ्कार-शास्त्रविषये लिखित एकमात्रग्रन्थः सरस्वतीकाण्ठाभरणमकवोपलभ्यते। अतिविशाले ग्रन्थेऽस्मिन् काव्यस्य प्रमुखानि तत्त्वानि विविक्तानिसन्ति। पञ्चपरिच्छेदेषु विभक्ते सरस्वतीकाण्ठाभरणे अलङ्कारास्त्रिविधाः वर्णिताः सन्ति- शब्दालङ्काराः अर्थालङ्काराः उभयालङ्काराश्चेति। पूर्णेऽस्मिन् ग्रन्थे ६४३ कारिकाः १५६१ उदाहरणानि च सन्तीति ।

**११.प्रश्नः- आचार्यमम्मटस्य परिचयो देयः?**

उत्तरम्- काव्यप्रकाशस्य रचनयाऽऽचार्यो मम्मटः अलङ्कारसाहित्यक्षेत्रे सुविख्यातः अभवत् । युगप्रवर्तकोऽयमाचार्यमम्मटः कश्मीरदेशवासिनो जैयटस्य पुत्र आसीत् । व्याकरणमहाभाष्यकारः कैयटः वेदानां भाष्यकारः जैयटश्चास्यानुजौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तः । सुधासागरटीकाकारेण भीमसेनमतेनायं मम्मटः नैषधीयचरितप्रणेतुः श्रीहर्षस्य मातुल आसीत् । श्रीमन्मम्मटस्य समयः १०५० खृष्टीयाब्दतः ११०० खृष्टीयाब्दान्तं निश्चीयते विद्वद्भिः । मम्मटाचार्येण स्वीये काव्यप्रकाशे काव्यस्य सर्वाङ्गानां विवेचनं पूर्णवैदुष्येणाकरोत् । ग्रन्थस्यास्य कारिका-वृत्ति-उदाहरणानीति त्रयो भागाः सन्ति। १४२ कारिकाः ६०३ उदाहरणानि च तत्र विद्यन्ते । आचार्यो मम्मटः काव्यशास्त्रं सुव्यवस्थितमकरोत्, अनेकासां भ्रान्तीनां निवारणञ्चाकरोत् । श्रीमन्मम्मटस्य ध्वनिमार्गानुसारिणि काव्यलक्षणे व्यावहारिकतायाः प्राधान्यं वर्तते। अलङ्कारान् वर्णयन् मम्मटस्तान् रसोत्कर्षकान् अमन्यत ।

**१२.प्रश्नः- भामहमते काव्यस्य किं स्वरूपम्?**

उत्तरम्- काव्यशास्त्रेऽलङ्कारसम्प्रदायस्य प्रवर्तकत्वेन प्रख्याताऽऽचार्यभामहः काव्यस्वरूपं निर्धारयन् स्वकीये काव्यालङ्कारे कथयति यत् 'शब्दार्थौ सहितौ काव्यम्' इति । एतल्लक्षणन्तु सामान्यजातीयं केवलं स्वरूपाधायकञ्च, न च कमप्युत्कर्षाधायकम् । समालोचकास्त्वत्र स्वरूपाधायकमपि लक्षणं न स्पृशन्ति। गणपतिचन्द्रगुप्तमतानुसारेण भामहस्य परिभाषा काव्येन साकं शास्त्रं भूगोलमितिहासं मौखिकवार्तालापमपि स्पृशति। अतोऽनया काव्याकाव्यनिर्णयो दूरमपेतः।

**१३.प्रश्नः- दण्डीमते काव्यस्य किं स्वरूपम्?**

उत्तरम्- काव्यशास्त्रेऽलङ्कारसम्प्रदायस्याऽऽचार्यदण्डिना 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' इति काव्यस्वरूपं काव्यादर्शे प्रतिपादितम् । अत्रेष्टपदप्रयोग एवाऽऽचार्यभामहलक्षणाद्विशिष्टः । समासतः परिभाषेयमाचार्यभामहस्य व्याख्यानभूता । अत एव विद्वद्भिरप्राप्तसमादरेयं परिभाषा ।

**१४.प्रश्नः- मम्मटमते काव्यस्य किं स्वरूपम्?**

उत्तरम्- स्वकीये काव्यप्रकाशे काव्यस्वरूपं निर्धारयन् मम्मटचार्यो लिखति यत् 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।' लक्षणमिदं दूषयन् लिखति विश्वनाथः साहित्यदर्पणे यद्यदि दोषरहितस्यैव काव्यात्वाङ्गीकारस्तदा 'न्यक्कारो ह्ययमेवे'त्यादिश्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्, प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता तस्मादतिव्याप्तिर्लक्षणदोषः । अतो मम्मटकृतकाव्यस्वरूपमाचार्यविश्वनाथमतेन नैव समीचीनमिति ।

**१५.प्रश्नः- कविराजविश्वनाथमते काव्यस्य किं स्वरूपम्?**

उत्तरम्- काव्यप्रकाशकारमम्मटप्रतिपादितकाव्यलक्षणं निरस्य स्वीयं लक्षणं समुपस्थापितं सान्धिविग्रहिकेण महापात्रविश्वनाथेन 'वाक्यं रसात्मकं काव्यम्' इति । किन्त्वेतल्लक्षणमपि खण्डितं श्रीकृष्णमोहनशास्त्रिणा स्वीयसाहित्यदर्पण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

टीकायाम्। सः कथयति यत् 'वाक्यं रसात्मकं काव्यमि'त्यादिकाव्यलक्षणं चिन्त्यम्, वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः ।

**१६.प्रश्नः-** कृतिवर्णनपुरस्सरमाचार्यजगन्नाथस्य परिचयं दीयताम्?

**उत्तरम्-** मुगलसम्राजः शाहजहाँ इत्येतस्य राजकविः तैलङ्गब्राह्मणः पेरुभट्टस्य पेरमभट्टस्य वा सुनुः जगन्नाथः शाहजहाँनृपतेः समकालिकः १६२० ईशाब्दतः १६७० पर्यन्तकाले आसीत् । अस्य आचार्यस्य माता लक्ष्मीः पिता पेरुभट्टश्च प्रकाण्डपण्डितः आसीत् । काव्यशास्त्रस्य प्रौढपण्डितेषु पण्डितराजजगन्नाथस्यातीवमहत्त्वपूर्णं स्थानमस्ति। पण्डितराजजगन्नाथस्यातिप्रसिद्धः आलङ्कारिको ग्रन्थः रसगङ्गाधरः वर्तते, यत्र तर्कनिकषे कषिताः सर्वे तथ्याः पाण्डित्यपूर्णपरिपाट्या प्रतिपादिताः सन्ति । काव्यस्वरूपं प्रतिपादयन् सः कथयति यत् 'रमणीयार्थप्रतिपादकः शब्दः काव्यमि'ति। अस्य कृतयस्तु- रसगङ्गाधरः, अमृतलहरी, लक्ष्मीलहरी, करुणालहरी, पीयूषलहरी, जगदाभरणम्, आसफविलासः, भामिनीविलासः, प्राणाभरणम्, यमुनावर्णनचम्पू, चित्रमीमांसाखण्डनम्, मनोरमाकुचमर्दनञ्च साहित्यशास्त्रे प्रख्याताः सन्ति ।

**१७.प्रश्नः-** आदिकविवाल्मींकिपरिचयपुरस्सरमादिकाव्यत्वेन प्रतिष्ठितस्य रामायणस्य परिचयं दीयताम्?

**उत्तरम्-** संस्कृत-साहित्ये लौकिक-छन्दोबद्ध-कवितायाः प्रादुर्भावः वाल्मीकित एव जातः । अत एव वाल्मीकिकृतं रामायणमादिकाव्यं कथ्यते। एकदाऽसौ महर्षिः सरसि स्नात्वा निवर्तमान आसीत्, तदा कस्यचिद् व्याधस्य शरैर्विद्धं क्रौञ्चमिथुनयोरन्यतमं मृतमवलोक्य विलपन्तीं क्रौञ्चीमपश्यत् । करुणया विह्वलस्यास्य वाल्मीकेः मुखारविन्दात् शोक तरङ्गिणी वाणी सहसा श्लोकरूपेणैव निःसृतवती; तथाहि-

> मा निषाद प्रतिष्ठा त्वमगमः शाश्वती समाः ।
> यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।

श्रीमहर्षेः मुखनिर्गलितं करुणामयञ्चेदं पद्यं भारतीयकाव्यस्य आदिकवितापदे प्रतिष्ठितं जातम् ।

**१८.प्रश्नः-** विश्वस्य वृहत्तमकाव्यस्य परिचयो देयः?

**उत्तरम्-** भारतीयसभ्यतायाः संस्कृतेश्च भव्यस्वरूपावबोधाय महाभारताख्यं ग्रन्थरत्नमिदमत्यावश्यकम् । भगवद्गीता-विष्णुसहस्रनाम-अनुगीता-भीष्मस्तवराज-गजेन्द्रमोक्षसंज्ञकपञ्चरत्नप्रदानादेवास्य पञ्चमवेदता। धर्मार्थकाममोक्षविषयकसम्यक् प्रबोधोऽत्रैव द्रष्टुं शक्यते । ग्रन्थोऽयं त्रिभिर्वर्षैः निर्मितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथोक्तमादिपर्वणि–

त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमुत्तमम् ।।

अत्र लक्षैकश्लोकाः सन्ति। शतसाहस्त्रीसंहिता नाम्नाऽप्यस्य प्रसिद्धिः। अस्यग्रन्थस्य मौलिकं रूपं जयनाम्ना प्रसिद्धम् । उपवृंहणोत्तरमयमेव भारतमभवत्। परिवृंहणोत्तरमस्य संज्ञाऽभवत् महाभारतमिति । पर्वणि विभक्तमिदं ग्रन्थम् ।

१९.प्रश्नः– रससम्प्रदायस्य प्रमुखाः आचार्याः के, रसविषये तेषाञ्च मतं किमिति स्पष्टयत?

उत्तरम्– वैदिकसाहित्ये रसशब्दस्योल्लेखः दरीदृश्यते, यथा– 'दधानः कलशे रसमि'ति; किन्त्वत्र रसशब्दप्रयोगः सोमरसार्थे एव । तैत्तिरीयोपनिषदि आनन्दार्थेऽप्यस्य शब्दस्य प्रयोगः, 'रसो वै सः' 'रस ह्येवायं लब्ध्वानन्दी भवति' इति। अलङ्कारशास्त्रेऽस्य शब्दस्यावतारस्तु भरतेनैवेति विदुषां विचारः । राजशेखरेण तु सर्वप्रथमं रसस्योपदेशो ब्रह्मणा नन्दिकेश्वराय प्रदत्त इति प्रतिपादितः, परन्तु तत् प्रतिपादितो रससिद्धान्त इदानीं नैवोपलब्धो वर्तते। वाल्मीकिरामायणेऽपि 'रसैः शृङ्गारकरुणरौद्रवीरभयानकैः' इति पद्येन रसानामुल्लेखो कृतो दरीदृश्यते। रसोऽयं कथमनुभूयते इत्यत्र नाट्यशास्त्राचार्याणां भरतमहोदयानां 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति विचार एव श्लाघ्यतरः ।

२०.प्रश्नः– अलङ्कारशास्त्रस्य कालविभाजनक्रमे आदिमः कालः कः?

उत्तरम्– प्रारम्भकाले भरतभामहावेव मुख्याचार्यौ प्राप्येते। भरतमुनिः स्वकीये नाट्यशास्त्रे रसं नाट्यस्य तत्त्वानि सुन्दरतया वर्णयन् दृग्गोचरो भवति । सः तत्र चतुरोऽलङ्कारान् दश गुणान् दश दोषांश्चोल्लिखन् प्राप्यते । तदीयं नाट्यशास्त्रं वस्तुतो वीजभूतमेव । गच्छता कालेन विद्वांस आचार्यास्तद्गतान्विषयान् वितेनुः। भरतानन्तरं मेधाविरुद्रप्रभृतयः कतिपये विद्वांसेऽजायन्त, परं न तेषां ग्रन्था उपलभ्यन्ते। भामह एवालङ्काराशास्त्रस्यातः प्रथमो आचार्यो मतः । काव्याऽलङ्काराभिधस्तदीयो ग्रन्थः अलङ्कारशास्त्रस्य मुख्यः प्रथमो वा ग्रन्थः स्मृतः ।

२१.प्रश्नः– अलङ्कारशास्त्रस्य रचनात्मकः कालः कः?

उत्तरम्– रचनात्मकः कालोऽलङ्कारशास्त्रस्यातिमहत्त्वमयः कालो गण्यते । अस्मिन् काले सञ्जाता रचनाः वस्तुतोऽलङ्कारशास्त्रस्य गौरवशालिन्यो रचनाः सन्ति । एतस्मिन् कालेऽलङ्कारजगति अलङ्कार–रीति–रस–ध्वनिनामकाश्चत्वारः सम्प्रदाया वीक्षिता अभूवन् । अलङ्कारसम्प्रदाये भामहोऽद्भटरुदटाः, रीतिसम्प्रदाये दण्डिवामनौ, रससम्प्रदाये लोल्लटशङ्कुकादयः, ध्वनिसम्प्रदाये चानन्दवर्धनः समजायन्त।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**२२.प्रश्नः- अलङ्कारशास्त्रे निर्णयात्मकः कालः कः?**

उत्तरम्- निर्णयात्मकः कालः महीयान् कालः अलङ्कारशास्त्रसंसारे मतो भवति। एतस्मिन् काले बहवः अलङ्कारशास्त्रपारावारीणा उदपद्यन्तः। ध्वन्यालोकलोचन-टीकाकारः अभिनवभारतीनिर्माता आचार्योऽभिनवगुप्तः, वक्रोक्तिजीवितकारः कुन्तकः, व्यक्तिविवेककारो महिमभट्टः कालस्यास्य प्रधानाःआचार्याः सन्ति। रुद्रभट्ट-भोजराज-धनिक-धनञ्जयाऽपि कालमिममधितस्थुः। आचार्यकुन्तकोऽपि वक्रोक्तिं प्रतिपाद्य प्रामुख्येन वक्रोक्तिसम्प्रदायं प्रतिष्ठापयामास महिमभट्टः स्वर-चनया ध्वनिसिद्धान्तं निराचकार।

**२३.प्रश्नः- अलङ्कारशास्त्रे व्याख्यात्मककालस्य प्रमुखा आचार्याः के सन्ति इति स्पष्टयत?**

उत्तरम्- अलङ्कारशास्त्रे व्याख्यात्मककालोऽपि नैजं महिमानं निदधाति। कालो-ऽयं दीर्घतमः। अस्मिन् काले हेमचन्द्र-विश्वनाथ-जयदेवादिकाः साहित्यस्य सर्वाङ्गानि समीचीनतया वर्णयामासुः प्रतिपादयामासुश्च। रुय्यकः अप्पयदीक्षितः अन्ये च कतिपये अलङ्कारेषु एव रुचिं दर्शयामासुः। शारदातनय-शिङ्गभूपाल-भानुदत्त-प्रभृतयश्चालङ्कारसिद्धान्तविवेचने प्रशंसनीयममुद्योगं चक्रुः। राजशेखर-क्षेमेन्द्रादिका विद्वद्वरेण्याः कविशिक्षाविषये ग्रन्थान् अजग्रन्थन्।

**२४.प्रश्नः- 'काव्यास्यात्मा ध्वनिरि' त्यस्य तात्पर्यं स्पष्टयत?**

उत्तरम्- ध्वनिसिद्धान्तसंस्थापकपरमाचार्यः आनन्दवर्धनः काव्यशास्त्रेतिहासे सर्वप्रथमं सिद्धान्ततः 'काव्यस्यात्मा ध्वनिरि'ति उद्घोष्य काव्यस्य आत्मस्थाने ध्वनेः प्रतिष्ठापनं करोति। ध्वनिकारः स्वयमेव स्वीकृतवान् यद्विद्वांसः तत्पूर्वमेव ध्वनिं काव्यतत्त्वरूपेणाङ्गीकृतवन्तः आसन्-

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषयं तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥

**२५.प्रश्नः- उत्तमकाव्यस्य का परिभाषा?**

उत्तरम्- उत्तमकाव्यं परिभाषयन् लिखति तत्रभवान् आचार्यमम्मटः स्वकीये काव्यप्रकाशे-

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।

इदं पदमत्र काव्यपदपरामर्शकं प्रकृतविषयत्वात्, वाच्यात्, अभिधावृत्तिप्रतिपद्या-दर्थाव्यङ्ग्ये व्यञ्जनावृत्तिपतिपाद्यर्थे, अतिशयिनि अधिकचमत्कारजनके सति, तदेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुधैः वैयाकरणैः ध्वनिपण्डितैश्च ध्वनिः कथितः। वाच्यार्थापेक्षया व्यङ्ग्यार्थस्याधिकचमत्कारित्वे उत्तमं ध्वनिर्नाम काव्यम्। ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्येति। प्रधानीभूतस्फोटस्य यथा शब्दार्थयुगलरूपकाव्ये ध्वनिर्व्यवहार इति तात्पर्यम्। यथा–

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीड़ागमे
वापीं स्नातुमिता गतासि न पुनस्तस्याधमस्यान्तिके॥

२६.प्रश्नः– काव्यस्य के दोषाः?

उत्तरम्– काव्यशास्त्रसम्बन्धिषु ग्रन्थेषु विषयोऽयमतीव महत्त्वपूर्णोऽस्ति। दोषस्य सामान्यलक्षणमाहाचार्यमम्मटस्तावत्–

मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः॥

इत्थं हि मम्मटादयोऽप्यन्योत्तरवर्त्तिनः लेखकाः एतान् भेदानेव स्वीकृतवन्तः। एवञ्चोद्देश्य प्रतीतिविघातकत्वं दोषत्वमिति दोषसामान्यलक्षणम्। दोषोऽयं हि नित्यानित्यरूपेण द्विविधोऽपि त्रिविधः– शब्ददोषः, अर्थदोषः, रसदोषश्चेति। तत्र शब्ददोषास्तावत् श्रुतिकटुत्वादयः षोडशसङ्ख्याकाः, अर्थदोषास्तु काव्यप्रकाशकारमम्मटानुसारेण त्रयोविंशतिसङ्ख्याकाः, अपि च ये साक्षाद्रसमपकर्षयन्ति ते रसदोषाः भवन्ति। ते हि चतुर्दशसङ्ख्याकाः भवन्तीत्यपि काव्यप्रकाश एव प्रतिपादितम्।

२७.प्रश्नः– अलङ्काराणां प्रारम्भिककाले कति भेदा आसन्?

उत्तरम्– भामहेन ज्ञातो भवति यत्तस्य पूर्ववर्त्तिनः आचार्याः केवलं पञ्चानामेवालङ्काराणामेवोल्लेखः कृतवन्तः। तद्यथा–

अनुप्रासः स यमको रूपकं दीपकोपमे।
इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः॥

काव्यालङ्कारसारसंग्रहानुसारेण कतिपयाः पूर्णवर्तिनः आचार्याः अष्टावलङ्काराणामुल्लेखं कृतवन्तः। तथाहि–

पुनरुक्तवदाभासं छेकानुप्रास एव च।
अनुप्रासस्त्रिधा लाटानुप्रासो रूपकं चतुः॥
उपमादीपकं चैव प्रतिवस्तूपमा तथा।
इत्येत एवालङ्काराः वाचां कैश्चिदुदाहृताः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२८.प्रश्नः- भट्टिकाव्यस्य परिचयो देयः?

उत्तरम्- शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरमस्ति। व्याकरणसम्बन्धिपदप्रयोग-नियमानां ज्ञानायान्यशास्त्रीयज्ञानसौलभ्याय च यानि यानि काव्यानि प्रणीतानि तानि शास्त्रकाव्यानीति नाम्ना प्रथन्ते । 'दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषे'ति कथनेनैवास्य शब्दस्वरूपप्रतिपादककाव्यस्य महत्त्वं प्रस्फुटीभवति । काव्यमिदं भट्टिस्वामिना प्रणीतम् । तन्नाम्नैव शास्त्रप्रसिद्धिरपि जाता । काव्यमिदं रावण-वधनाम्नाऽपि प्रथिता । अत्र काव्ये द्वाविंशतिः सर्गाः सन्ति, येषु संहत्य १६२९ मिताः श्लोकाः विद्यन्ते। अस्य काव्यस्य निर्माणमुद्देश्यं मनोविनोदेन सह संस्कृत-व्याकरणस्य ज्ञानमस्ति। ग्रन्थेऽस्मिन् चत्वारि खण्डानि सन्ति- प्रकीर्णकाण्डम्, अधिकारकाण्डम्, प्रसन्नकाण्डम्, तिङन्तकाण्डञ्चेति ।

२९. प्रश्नः- धनञ्जयकृतदशरूपकस्य परिचयो देयः?

उत्तरम्- आचार्यधनञ्जयः दशरूपककर्त्ता 'विष्णु'पुत्रः मालवापरमारवंश-मुञ्जराजस्य राजकविः दशमशतकोत्तरार्धसमये आसीत्। स्वपित्रादीनां नामानि तेन स्वयमेवोक्तानि। तद्यथा-

विष्णोः सुतेनाऽपि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः ।
आविष्कृतं मुञ्जमहीशगोठीवैदग्ध्यभाजा दशरूपमेतत् ।।

आचार्यधनञ्जयस्य मुख्यः सम्वन्धो नाट्यशास्त्रेण साकं वर्तते न तु काव्यशास्त्रेण। भरतमुनेर्नाट्यशास्त्रानन्तरं नाट्यशास्त्रविषयकोऽयं सर्वाधिकप्रख्यातो ग्रन्थो वर्तते। नाट्येन सम्बद्धानां विषयाणामध्ययनस्य दुष्करत्वमेवाकलय्याचार्यो धनञ्जयो दशरूपकग्रन्थस्य निर्माणमकरोत् । अस्मिन् ग्रन्थे धनञ्जयो नाट्येन सम्बद्धानां सर्वेषां विषयोपविषयाणां नाट्यशास्त्रात् सङ्कलनं चकार । नाटकस्य लक्षणादीनां संक्षेपेणोपस्थापनमेवास्य ग्रन्थस्य प्रयोजनमास्ते । ग्रन्थोऽयं कारिका-रूपेण लिखितो वर्तते। अस्मिन् प्रायः ३०० कारिकाः सन्ति । अस्मिन् ग्रन्थे चत्वारः प्रकाशाः सन्ति। संस्कृतनाट्यशास्त्रस्य विषये त्रयाणां महत्त्वपूर्णग्रन्थानां रचनाऽभवत्। एषु ग्रन्थेषु भरतस्य नाट्यशास्त्रम्, अवलोकसहितं दशरूपकम्, तथा साहित्य-दर्पणस्य च नाम विशेषरूपेणोल्लेखनीयमस्ति ।

३०. प्रश्नः- नाटकस्य किं स्वरूपं कति च भेदाः?

उत्तरम्- संस्कृतसाहित्ये नाटकन्तु रूपकाणामेकः प्रभेदो वर्तते । रूपके तत्तत्पात्र-विशेषस्य नटोपरि आरोपो भवति । तद्यथा-

अवस्थानुकृतिनाट्यं रूपं दृश्यतयोच्यते ।
रूपकं तत्समारोपाद् दशधैव रसाश्रयम् ।।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तानेव रूपकान् दशभेदानुद्दिशति दशरूपके आचार्यधनञ्जयः-

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ।।

३१.प्रश्नः- व्यक्तिविवेककारमहिमभट्टस्य परिचयो देयः?

उत्तरम्- काश्मीरेषु लब्धजन्मा न्यायाचार्यो महिमभट्टः व्यक्तिविवेकं नामग्रन्थं व्यरचयत्। अयमाचार्यः ध्वनिविरोधी आसीत्। अनेन सर्वस्य ध्वनेरनुमानेऽन्तर्भावं कर्त्तुं व्यक्तिविवेकः प्रणीतः । ग्रन्थरचनायाः उद्देश्यं तेनैव श्लोकेनैकेन प्रकाशितम्-

अनुमानेनान्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमां परां वाचम् ।।

व्यक्तिविवेकग्रन्थे त्रयो विमर्शाः सन्ति- प्रथमे ध्वेनरनुमानप्रकारत्वं व्यवस्थापितम्, द्वितीयेऽर्थविषयकानौचित्यं निरूपितम्, तृतीये बहिरङ्गानौचित्यं विवेचितम्, व्यक्तिविवेकशब्देनात्र व्यञ्जना गृह्यते, विवेकशब्देन च समीक्षणम् । व्यक्तिविवेककर्तुरस्य महिमभट्टस्य काल एकादशशताब्दस्य पूर्वार्द्ध एव स्वीक्रियते ऐतिह्यविद्भिः । स्वपितापुत्रादीनां नामानि व्यक्तिकववेकसमाप्तौ महिमभट्टेन स्वयमेवोक्तानि । तथाहि-

आधातुं व्युत्पत्तिं नप्तृणां क्षेमयोगभाजानाम् ।
सत्सु प्रथितनयानां भीमस्यामितगुणस्य तनयानयम् ।।
श्रीधैर्यस्याङ्गभुवा महाकवेः श्यामलस्य शिष्येण ।
व्यक्तिविवेको विदधे राजानकमहिमकेनायम् ।।

३२.प्रश्नः- कृतिनिर्देशपुरस्सरं भोजराजस्य परिचयो देयः?

उत्तरम्- महाराजो भोजो धारानगरस्य सुव्यवस्थितशासकः परमारवंश्यश्चा सीत्। भोजराजस्य स्थितिकालस्तु ख्रीष्ट्र ९९६ संवत्सरादारभ्य १०५१ वत्सरपर्यन्त इति सकलविद्वज्जनप्रसिद्ध एवेति । अयं हि सरस्वतीकण्ठाभरणरामायणचम्पूशृङ्गारप्रकाशादिग्रन्थानां कर्त्ता आसीत् । सरस्वतीकण्ठाभरणशृङ्गार प्रकाशकौ द्वौ चालङ्कारग्रन्थौ विशालकायौ स्तः। सरस्वतीकण्ठाभरणग्रन्थस्तु पञ्चसु परिच्छेदेषु प्रविभक्तो वर्तते । तत्र प्रथमे तावत् गुणदोषयोः विवेचनं, द्वितीये चतुर्विंशतिसङ्ख्याकानां जाति-रीति-वृत्ति-छाया-मुद्रा-गुम्फनादीनां वर्णनं, तृतीये चतुर्विंशतिसङ्ख्याकानां जाति-विभावना-हेतु-अहेतु-सूक्ष्म-उत्तर-विरोधादीनामर्थालङ्काराणां विवेचनं, चतुर्थे चतुर्विंशतिसङ्ख्याकानामुपमा-रूपक-साम्य-संशय-अपह्नुति-समाधि-समासोक्त्यादीनां सन्निवेशनं, पञ्चमे च रसानां, भावानां,नायक-नायिकानां तासामुपभेदादीनाञ्च विवेचनं कृतं वर्तते । भोजराजः सरस्वतीकण्ठाभरणे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पञ्चदशतानि अन्येषां श्लोकानाम् उदाहरणानि उपन्यस्तवान् । ग्रन्थेऽस्मिन् ६४३ करिका: सन्ति । अलङ्कारविषयिणी भोजरास्यापरा कृतिः शृङ्गारप्रकाशो विद्यते, परन्त्वयं ग्रन्थोऽद्यावधि नैव प्रकाशितः ।

**३३.प्रश्नः- हेमचन्द्रकृतकाव्यानुशासनस्य परिचयो देयः?**

उत्तरम्- हेमचन्द्रोनाम जैनाचार्यो १०८८-११७२ ई.कालिकोऽलङ्कारशास्त्रे काव्यानुसानं नाम ग्रन्थं सोपज्ञवृत्तिसंहितं प्रणीतवान् । जैनाचार्येषु हेमचन्द्रस्योच्चतमं स्थानमस्ति । अस्य काव्यग्रन्थस्य नाम काव्यानुशासनमास्ते। सूत्रात्मिकां शैल्यामलिखितस्यास्य ग्रन्थस्यायं स्वयमेव विवेकाभिधानां व्याख्यामलिखत्। ग्रन्थोऽयं महावीरजैनविद्यालयसंस्करणे भागत्रये विभक्तोऽस्ति- सूत्र-वृत्ति-उदाहरणानि चेति।

**३४.प्रश्नः- महाकवि कालिदास कृतकाव्यानां परिचयो देयः?**

उत्तरम्- कालिदासस्य रचनायाः परिगणनमतीव दुष्करं कार्यमस्ति । तथापि विद्वांसः महाकविकालिदासस्य सम्प्रति एताः कृतीः प्रमाणीकुर्वन्ति- ऋतुसंहारः, कुमारसम्भवम्, मेघदूतम्, रघुवंशम्, अभिज्ञानशाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयञ्च । काव्यचतुष्टयं नाटकत्रयं च कालिदासरचितमिति । कालिदासः मूलतः शृङ्गाररसस्य कविः, परन्त्वस्य शृङ्गारे ब्रह्मचर्यस्य प्रभूतं महत्त्वमस्ति। यथोक्तं कविना-

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।

कालिदासः उपमायाः सम्राट् । समालोचकैरपि स्वीकृतं यद्-
'उपमा कालिदासस्य' इति।

**३५.प्रश्नः- ''उपमा कालिदासस्ये'त्याभाणकं युक्तियुक्तं विवेचनीयम्।**

उत्तरम्- महाकविः कालिदासः प्रतिभासम्पन्नकविरासीत् । रसमय्या पद्धतेः सुकुमारमरर्गस्य च प्रवर्तकोऽयं कविः । भावोदात्ततायाः सञ्चाराय सालङ्काराणां शब्दानां प्रयोगमौचित्यानुसारेण करोति। सर्वेषु अलङ्कारेषु कालिदासस्य उपमा संस्कृतसाहित्ये प्रसिद्धाऽस्ति। भावप्रदर्शनाय यादृशी उपमा कालिदासस्य भवति, न तादृशी केषाञ्चित् कवीनामिति। अस्य कवेः उपमा चलचित्रमिव चित्रमङ्कयति। कालिदासस्योपमानोपमेययोः समानलिङ्गकत्वस्य समानविभक्तिकस्य च प्रयोगादन्यापेक्षया वैशिष्ट्यं बोध्यते । कालिदासस्य मनोहरा सर्वश्रेष्ठोपमा काव्ये यत्र तत्र सर्वत्रापि च निजवैशिष्ट्यं तनोति । अतः भारतीयसमालोचकानामाभाणकमिदम् 'उपमा कालिदासस्य' इति सत्यं प्रतिभाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**३६.प्रश्नः- भवभूतेः साहित्यिकजीवनस्य परिचयो दीयताम्?**

उत्तरम्- संस्कृतनाट्यकारेषु भवभूतेः महती प्रसिद्धिरस्ति । संस्कृतनाट्यसाहित्यस्याद्भुतः शिल्पी भवभूतिरिति कथने न कोऽपि संशयः । मानवहृदयविकारान् यथाऽयं कविः जानातिस्म तथा विरला एवैतादृशाः कवयः दृश्यन्ते । भवभूतेः संस्कृतसाहित्ये ख्यातिप्राप्तानि एतानि नाटकरत्नानि सन्ति-मालतीमाधवम्, महावीरचरितम्, उत्तररामचरितञ्चेति ।भवभूतेः नाटकेषु नाट्यकलायाः देदीप्यमानान्युदाहरणानि विद्यन्ते । उत्तररामचरिते अस्य चरमान्तं चमत्कारं प्राप्यते । भवभूतेः करुणरसचित्रणं विलोक्य श्रीगोवर्धनाचार्येण सत्यमेवोक्तं यत्-

भवभूतेः सम्बन्धात् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ।।

**३७.प्रश्नः- 'कारुण्यं भवभूतिरेव तनुते' इत्याभाणकस्य सार्थकतां स्पष्टयत?**

उत्तरम्- एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणोद्भुतम् ।।

विश्वनाथमतस्यास्याशयः यन्नाटके शृङ्गारो वीरो वा एक एव रसोऽङ्गी भवेदन्ये सर्वे रसाः अङ्गमिति । अस्या रूढेः पालनार्थं केचित्समालोचकाः उत्तररामचरिते विप्रलम्भशृङ्गार एव प्रधानो रस इति स्वीकुर्वन्ति, तन्न रुचिकरम् । वस्तुतस्तु भवभूतिना प्राचीनपरिपाटीमुपेक्ष्य करुणरसप्रधानं नाटकं रचितम् । यतो ह्यस्मिन् नाटके प्राचीनपरम्परायाः कतिचिदंशाः विरुद्धाः नवशैलीयुक्ताश्च दृश्यन्ते। कल्पनामिश्रितस्य छायाङ्कस्य सृष्ट्या स्वाभिमतं प्रकटयति कविः। भवभूतिना नाटके करुणरसे एव अन्येषां रसानामन्तर्भावः कृतः। तथाहि-

एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान्विकारानम्भो यथा सलिलमेव हि तत्समस्तम् ।।

**३८.प्रश्नः- महाकवेरश्वघोषस्य परिचयं लिखत?**

उत्तरम्- हृदयगतभावनाया उद्बोधिका भवति कविता। प्राक्तनकालादेव धर्मस्य स्वोद्देश्यस्य च प्रचाराय मानवः कविताया आश्रयं गृह्णाति । महाकविरश्वघोषोऽपि बौद्धधर्मप्रचाराय काव्यं विरचितवान् । सौन्दरानन्दस्यान्ते कविना स्वयमेवोक्तं यद्यथा तिक्तौषधिं पानाय मधुना सम्मेल्यते तथैवाहमपि धर्मप्रचाराय काव्यास्याश्रयं गृहीतवानस्मि । अस्य प्रामाणिका ग्रन्थाः सन्ति- बुद्धचरितम्, सौन्दरानन्दम्, शारि-पुत्रप्रकरणञ्चेति । सौन्दरानन्दस्य पुष्पिकया एतत् प्रमाणितं भवति यदश्वघोषः साकेतस्य निवासी आसीत् । सुवर्णाक्ष्याः पुत्रोऽश्वघोषः तार्किकः रामायणमहाभारतयोः विशेषज्ञश्चासीत् । अश्वघोषस्य स्थितिकालस्तु सामान्यतः शता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्धाः पूर्वार्द्धं मन्यन्ते ऐतिह्यविदः ।

३९.प्रश्नः- 'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तले'त्याभाणकस्यौचित्यं प्रतिपादनीयम्?

उत्तरम्- श्रव्यं दृश्यञ्च द्विविधं भवति काव्यम् । श्रव्यकाव्यापेक्षया दृश्यकाव्यं रम्यं भवतीति सर्वविदितं विद्यते । यतोहि दृश्यकाव्ये गद्यपद्ययोःकथोपकथनयोः सम्मिश्रणं भवति, परन्तु श्रव्यकाव्ये काव्यमर्मज्ञाः विद्वांस एव तस्यानन्दमनुभवितुं शक्नुवन्ति । नाटके नृत्यसङ्गीतयोः समावेशः प्रायः भवत्येव; अतः काव्येषु नाटकं रम्यमिति कथनं सर्वथा युक्तियुक्तं प्रतिभाति । नाटकेऽपि शकुन्तला रम्येति कथ्यते । संस्कृतनाटकरत्नेषु अभिज्ञानशाकुन्तलं हीरकमिव संस्कृतसाहित्ये चकास्ति। नाट्यशास्त्राचार्याः नाटके येषां नाटकतत्त्वानां परिगणनं कारयन्ति तानि सर्वाणि नाटकतत्त्वानि अभिज्ञानशाकुन्तले प्राप्यन्ते । नाटकस्यास्य कथावस्तु प्रेमप्रसङ्गादेवाङ्कुर उद्गच्छति प्रेमस्वेव चान्तो भवति । चरित्रचित्रणेऽपि नाटकमिदमद्वितीयम् । कलादृष्ट्या नाटकस्य महत्त्वमियद्विद्यते यद्विश्वसाहित्ये नाटकमिदं महार्हहीरकमिवास्तीति कथनेनातिशयोक्तिः। सौन्दर्यवर्णने कवेरस्य प्रतिभा सर्वोपरि विद्यते । वैशिष्ट्यैरेभिस्तत्र नाटकेषु शकुन्तला रम्येति कथनं नितान्तं सत्यमेवेत्यत्र न काचिद्विप्रतिपत्तिः ।

४०.प्रश्नः- कृतिविवेचनपुरस्सरं महाकविमाघस्य जीवनपरिचयो देयः?

उत्तरम्- शिशुपालवधमहाकाव्यस्य प्रणेता कविर्माघः अस्ति। कवेरस्य जन्म गुर्जरप्रान्ते ब्राह्मणवंशेऽभवत् । अस्य पिता दत्तकः विद्वान् दानशीलश्चासीत् । भीलमालनाम्नि नगरे कवेः जन्म जातम् । तत्समये नगरमिदं विद्यायाः प्रधानकेन्द्रमासीत्। कविः माघोऽपि निजपितृवद्दाता दयालुश्चासीत् । कवेरस्य स्थितिकालविषये विदुषां मतैक्यं नास्ति । वस्तुतस्तु नवमशताब्दीषु आनन्दवर्धनः ध्वन्यालोके माघस्य पद्यमुद्धृतवान्; अतोऽस्य स्थितिकालः सप्तमशताब्द्याः उत्तरार्धे स्वीक्रियते। माघरचितशिशुपालवधे शब्दालङ्काराणां मधुरो झङ्कारः दृश्यते । अत्र सः काव्यविषयकं स्वमन्तव्यं प्रकटयन् शब्दार्थयोः सामञ्जस्यमेव काव्यमिति प्रतिपादयति। महाकाव्येऽस्मिन् विंशतिः सर्गाः सन्ति; तत्र १६५० श्लोकाः विद्यन्ते ।

४१.प्रश्नः- 'माघे सन्ति त्रयो गुणाः' सूक्तेः सत्यता परीक्षणीया?

उत्तरम्- कविकालिदासकृतकुमारसम्भवेन भारविकृतकिरातार्जुनीयेन चाच्छादिते साहित्याकाशसमये सर्वगुणोपेतम्, सर्वालङ्कारेण अलङ्कृतम्, पदलालित्येन ललितम् अर्थगौरवेण अतिगरीयः शिशुपालवधंनाम माघस्य महाकाव्यं साहित्याकाशे समुदितम्; यद्विलोक्य साहित्यसमालोचकाः आश्चर्यसागरे पूर्णतया निमग्ना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बभूवुः । माघस्य कवितासु न भवतु कालिदाससदृश्युपमा, परन्तु मनोहारिण्याः उपमायाः अभावोऽपि नास्ति । न वा माघस्य काव्ये अर्थगौरवस्य न्यूनता एव दृश्यते । कवेरस्य ललितपदविन्यासस्तु नूनमेव प्रशंसनीयः । माघः न केवलं रसिकः कविः अपितु सर्वशास्त्रज्ञः प्रकाण्डविद्वाँश्चासीत् । माघसदृशी विद्वत्ता संस्कृतसाहित्ये विरलेष्वेव कविषु दृश्यते । माघस्य पाण्डित्यं तु सर्वशास्त्रस्य परिचायकं वर्तते ।

**४२.प्रश्नः- काव्यकलादृष्ट्या संस्कृतसाहित्ये भारवेः किं वैशिष्ट्यम्?**

उत्तरम्- संस्कृतसाहित्ये महाकाव्यकारेषु कालिदासाश्वघोषयोः पश्चाद् भारवेः गणना भवति । भारवेः काव्ये किरातार्जुनीये कालिदासस्यानुकरणं दृश्यते । महाकविभारवेः समयः अष्टमशताब्द्यामेव मन्तव्यः । भारविणा किरातर्जुनीयमेवैकं काव्यं रचितम् । काव्यस्य कथानकं महाभारतस्य वनपर्वणः गृहीतम्। संस्कृत-साहित्ये वृहत्त्रयीग्रन्थेषु किरातार्जुनीयं ख्यातिप्राप्तं महाकाव्यं विद्यते। काव्यस्या-ष्टादशसर्गाः सन्ति । भारवेः अर्थगौरवं संस्कृतसाहित्ये प्रसिद्धं वर्तते। नारिकेलर-समिव भारवेः कवितासु विविधरूपाः अर्थगम्भीरताः लक्ष्यन्ते। वस्तु-तस्तु भारवेः कवितासु नीतिशास्त्रस्य प्रतिपादनं, व्यावहारिकं वातावरणं, धर्मः, सदाचारश्चेत्यादयः विषयाः अधिकतया प्राप्यन्ते । भारवि यदि राजनीतिशास्त्रस्य वेत्तासीत्तदा प्राप्त-प्रतिभः कविरप्यासीत्। प्रकृतिवर्णनेऽप्यसौ सिद्धहस्तः। हितं मनोहारि च दुर्लभं वचः, वरं विरोधोऽपि समं महात्मभिरित्यादिसूक्तयः साहित्य-जगति कवेः यशः तन्वन्ति ।

**४३.प्रश्नः- समासतः श्रीहर्षस्य जीवनवृत्तं तस्य ग्रन्थपरिचयश्च दीयताम्?**

उत्तरम्- श्रीहर्षस्य पिता श्रीहीरः माता च मामल्लदेवीति स्वयमेव महाकविः नैषधीयचरितस्य प्रतिसर्गस्यान्ते परिचाययति । श्रीहर्षः कान्यकुब्जेश्वरस्य जय-चन्द्रस्य राजसभायां प्रधानभूतः पण्डित आसीत्। श्रीहर्षस्य सम्प्रति एते ग्रन्थाः प्राप्यन्ते। स्थैर्यविचारप्रकरणम्, विजयप्रशस्तिः, खण्डनखण्डखाद्यम्, गौडोर्वीश-प्रशस्तिः, अर्णववर्णनम्, छन्दप्रशस्तिः, शिवशक्तिसिद्धिः, नवसाहसाङ्कचरितचम्पूः, नैषधीयचरितश्चेति । श्रीहर्षः न केवलं कविरपितु प्रकाण्डदार्शनिकोऽप्यासीत् । येन कविना काव्यकलायां वैशिष्ट्यतरं शृङ्गररसप्रधानं नैषधीय-चरितं महाकाव्यं रचितम् तेनैव कविना प्रखरपाण्डित्यप्रदर्शकं खण्डनखण्डखाद्यन्यायग्रन्थोऽपि विरचित इति महदाश्चर्यम् ।

**४४.प्रश्नः- सुबन्धोः काव्यशैलीं प्रतिपाद्य गद्यसाहित्ये तस्य स्थाननिर्धारणं कुरुत?**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्तरम्- अलङ्कृतशैल्यां गद्यकाव्यस्य प्रथमो लेखकः सुबन्धुरेव । अस्यैव काव्यमलङ्कृतशैल्याः उत्कृष्टोदाहरणं भवति । संस्कृतसाहित्यस्य गद्यसाहित्ये सुबन्धोरेकमेव वासवदत्तानामकाव्यं साहित्यगगनेऽस्य कीर्तिध्वजां धुनोति । वासवदत्तायाः गद्यशैली एवं दृश्यते यत्र कथा स्वल्पा, किन्तु वर्णनमाडम्बरपूर्णं लम्बायमानञ्च विद्यते । कविः निजकौशलेन विविधालङ्कारैः कथानकं समलङ्कृत्यातिचमत्कारं प्रदर्शयति । विशेषतस्तु सुबन्धुः श्लेषकविरासीदिति नात्र संशयः। सुबन्धोः काव्ये कलापक्षस्यैव साम्राज्यं विद्यते ।

४५.प्रश्नः- 'वाणी बाणो बभूवेति' आभाणकं समालोच्यताम्?

उत्तरम्- गद्यसाहित्ये बाणस्य महत्त्वपूर्णं स्थानमस्ति। बाणस्य गद्यस्योपमा निखिले संस्कृतसाहित्ये सयत्नान्वेषणेनापि न प्राप्यते। प्रभावशालिगद्यनिर्माणे बाणः सिद्धहस्तः अद्वितीयश्चासीत् । बाणः सरस्वत्याः वरदपुत्रः । प्राचीनकालादेव समालोचकानां दृष्टिः बाणस्य सरसमधुरासु रचनासु पपात। श्रीगोवर्धनाचार्यस्तु महाकविबाणं वाग्देवतायाः अवतारं स्वीचकार-

जाता शिखण्डिनी प्राक् यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ।।

४६.प्रश्नः- बाणस्य परिचयं प्रतिपाद्य गद्यसाहित्ये बाणभट्टस्य स्थानं निर्धार्यताम्?

उत्तरम्- बाणस्य पूर्वजाः शोणनद्यास्तटस्थिते प्रीतिकूटनाम्नि नगरे निवसन्तिस्म। स्थानमिदं बिहारराज्ये आरामण्डलान्तर्गतं साम्प्रतं प्राप्यते । वात्स्यायनगोत्रसमुत्पन्नस्य बाणस्य पिता चित्रभानुरासीत् । बाणस्याप्रतिमप्रतिभया प्रसन्नो भूत्वा श्रीहर्षेणाऽसौ आश्रयमवाप्तवान् । बाणस्य प्रारम्भिकी रचना हर्षचरितमस्ति । तदनन्तरं बाणेन चण्डीशतकं, कादम्बरी महाकाव्यञ्च रचितम् । सर्वेषु गद्यकविषु बाणस्य स्थानमुच्चतमं विद्यते। बाणस्तु गद्यस्याचार्य एवेति कथने न काप्यत्युक्तिः। यतो हि 'गद्यं कवीनां निकषं वदन्ति' इति नीत्या बाणस्य गद्यं गद्यसाहित्यस्यादर्शमेवेति । साम्प्रतमपि गद्यकाव्येषु कादम्बरी आदर्शभूता अतिवैशिष्ट्यं भजते । अनेके कवय एनामेवानुकृत्य काव्यमरीरचन् ।

४७.प्रश्नः- कवेः विशाखदत्तस्य साहित्यिकपरिचयो दीयताम्?

उत्तरम्- संस्कृतस्य निखिलेभ्यः नाटककारेभ्यः भिन्नोऽयं विशाखदत्तनामा नाटककारः, यः कूटनीतिं, राजनीतिञ्चाश्रित्य नाटकं निर्मितवान् । विशाखदत्तः कौटिल्यार्थशास्त्रस्य शुकनीतिशास्त्रस्य च प्रकाण्डविद्वान् आसीत् । ज्योतिःदर्शनन्यायशास्त्रेषु चास्य नैपुण्यं दृश्यते । अस्यैतानि नाटकानि सम्प्रति प्राप्यन्ते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१.मुद्राराक्षसम्, २.देवीचन्द्रगुप्तम्, ३.अभिसारितवञ्चितकञ्च । अस्य कृतिषु मुद्राराक्षसं महनीयं नाटकं विद्यते । संस्कृतसाहित्ये मुद्राराक्षसं नाम नाटकमनेकाभिः दृष्टिभिरद्वितीया कृतिरिति नात्र संशयः ।

**४८.प्रश्नः- शूद्रकस्य परिचयं दत्वा नाट्यकलादृष्ट्या मृच्छकटिकम् नाम-नाटकस्य समीक्षा कार्या?**

उत्तरम्- संस्कृतसाहित्ये शूद्रकस्य महती प्रसिद्धिरस्ति । शूद्रककृतमृच्छकटिके तु दशसङ्ख्याकाः अङ्काः सन्ति । शूद्रकः हस्तिशास्त्रेषु प्रवीण आसीत् । अनेन शिवस्यानुग्रहेण ज्ञानं प्राप्तं विधिना चाश्वमेधयज्ञं कृतवान् । राज्यसिंहासने पुत्रं प्रतिष्ठाप्य शतायुः शूद्रकोऽग्निं प्रविष्टः। नाट्यकलादृष्ट्या तु मृच्छकटिकं सुन्दरं सफलं च नाटकं विद्यते । शूद्रकः प्राचीनपरिपाटीं परित्यज्याभिनवां नाट्यकलां गृह्णाति। शूद्रकस्य शैली सरला प्रसादगुणगुम्फिता चास्ति । नाटकस्य मुख्यो रसः शृङ्गार एव । वर्षर्तुवर्णनं शूद्रकेण कियन्मनोहरं विशदीकृतमिति न कदापि विस्मर्तव्यम् । किमधिकं मृच्छकटिकनाटकं सफलं सामाजिकं नाटकमिति न केषाञ्चित् विमतिः ।

**४९.प्रश्नः- भट्टनारायणस्य परिचयं दत्त्वा तत्कृत'वेणीसंहार'नामनाटकस्य समीक्षा कार्या?**

उत्तरम्- संस्कृतसाहित्ये भट्टनारायणस्य परिचयज्ञानमतिकठिनं विद्यते । कविना स्वस्मिन् विषये कुत्रापि किमपि न लिखितम् । नाटकस्य प्रस्तावनया केवलमिदमेव ज्ञायते यदयं मृगराजलक्ष्म आसीत् । गौडदेशस्य राज्ञः आदिशूरस्य निमन्त्रणादनुरोधाद्वा वङ्गीयेषु पञ्चब्राह्मणेषु श्रीभट्टनारायणोऽन्यतम आसीत् । अस्य रचना वेणीसंहारनाटकमस्ति। महाभारतस्य कथामादाय कविनाऽतिकौशलेन नाटकमिदं रचितम् । संस्कृतस्य नाट्यशास्त्रानुसारेण नाटकमिदमादर्शमयं विद्यते। नाटकेऽस्मिन् पञ्चसन्धीनां सन्निवेशः दृश्यते । नाटकस्य पात्राणि इतिहासप्रसिद्धानि वीररसपूर्णानि च सन्ति । नाट्यकलादृष्ट्या वेणीसंहारनाटकं नितान्तं निर्दोषं सफलञ्चास्ति । नाटकेऽस्मिन् मुख्यो रसः वीरः, रौद्र-शृङ्गारौ च सहायकौ । शान्तरसोऽपि यद्यपि नाटकादौ वर्ण्यते, परमयं गौण एव ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## वस्तुनिष्ठप्रश्नास्तेषामुत्तराणि च

*****

०१.प्रश्नः:- धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधु काव्यनिबन्धनम् ।।
केन कथितमिदं पद्यम्?

(क) दण्डिना ( ) (ख) भामहेन ( )
(ग) मम्मटेन ( ) (घ) भरतमुनिना ( )

०२.प्रश्नः:- काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृत्तये कान्तासंमिततयोपदेशयुजे ।।
इयं कारिका किं सूचयति?

(क) काव्यहेतुं ( ) (ख) काव्योपादेयता ( )
(ग) काव्यभेदं ( ) (घ) काव्यप्रयोजनं ( )

०३.प्रश्नः:- नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ।।
श्लोकोऽयं कस्मिन् ग्रन्थे वर्तते?

(क) साहित्यदर्पणे ( ) (ख) काव्यप्रकाशे ( )
(ग) अग्निपुराणे ( ) (घ) विष्णुपुराणे ( )

०४.प्रश्नः:- 'पदं हि सर्वत्र गुणैर्निधीयते'- कस्योक्तिरियम्?

(क) माघस्य ( ) (ख) कालिदासस्य ( )
(ग) श्रीहर्षस्य ( ) (घ) जयदेवस्य ( )

०५.प्रश्नः:- 'नहि सर्वः सर्वं जानाति' इति कः कविरङ्गीकरोति?

(क) विशाखदत्तः ( ) (ख) शूद्रकः ( )
(ग) भासः ( ) (घ) कालिदासः ( )

०६.प्रश्नः:- 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्' इत्युक्तेः वक्ता कः?

(क) अश्वघोषः ( ) (ख) भारविः ( )
(ग) माघः ( ) (घ) भवभूतिः ( )

०७.प्रश्नः:- 'उदारचरितानां तु वसुधैव कुटुम्बकम्'- पक्तिरियं कुत्रास्ति?

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(क) नीतिशतके ( ) (ख) पञ्चतन्त्रे ( )
(ग) कथासरित्सागरे ( ) (घ) हितोपदेशे ( )

०८.प्रश्नः- 'मां निषाद प्रतिष्ठां त्वमगमः' इत्ययं श्लोकः कस्मिन् छन्दसि अस्ति?
(क) विषमवृत्ते ( ) (ख) आर्यावृत्ते ( )
(ग) समवृत्ते ( ) (घ) अनुष्टुब्वृत्ते ( )

०९.प्रश्नः- आदिकाव्यत्वेन कः प्रसिद्धः?
(क) रघुवंशम् ( ) (ख) महाभारतम् ( )
(ग) रामायणम् ( ) (घ) शाकुन्तलम् ( )

१०.प्रश्नः- वाल्मीकिना विरचितं श्रीमद्रामायणं प्रथमं केन गीतम्?
(क) लवचन्द्रकेतू ( ) (ख) द्वौ मुनिकुमारौ ( )
(ग) लवकुशौ ( ) (घ) वाल्मीकिशिष्यौ ( )

११.प्रश्नः- आर्यावृत्तबद्धा मुक्तकरूपाश्च श्लोकाः खण्डकाव्येऽस्मिन् लसन्ति?
(क) चौरपञ्चाशिका ( ) (ख) आर्यासप्तशती ( )
(ग) कलाविलासः ( ) (घ) नीतिप्रदीपः ( )

१२.प्रश्नः- 'भट्टिकाव्यमिति' प्रसिद्धिः कस्य?
(क) रावणवधस्य ( ) (ख)नैषधीयचरितस्य ( )
(ग) शिशुपालवधस्य ( ) (घ) मध्यमव्यायोगस्य ( )

१३.प्रश्नः- 'सञ्चारिणी दीपशिखेव रात्रौ' इत्यादिश्लोकेन कः कविः नितरां प्रसिद्धः?
(क) माघः ( ) (ख) दण्डी ( )
(ग) कालिदासः ( ) (घ) भारविः ( )

१४.प्रश्नः- पञ्चमहाकाव्येषु भारविप्रणीतकाव्यः' कः?
(क) शिशुपालवधम् ( ) (ख) नैषधीयचरितम् ( )
(ग) रघुवंशम् ( ) (घ) किरातार्जुनीयम् ( )

१५.प्रश्नः- दण्डिनः काव्यस्य वैशिष्ट्यं किम्?
(क) अर्थगौरवम् ( ) (ख) पदलालित्यम् ( )
(ग) उपमालङ्कारः ( ) (घ) माधुर्यौजप्रसादगुणाः( )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१६.प्रश्नः- पञ्चमहाकाव्येषु कालिदासस्य महाकाव्यद्वयं के?
(क) शाकुन्तलं-मालविकाग्निमित्रं च ( )
(ख) विक्रमोर्वशीयं-ऋतुसंहारश्च ( )
(ग) कुमारसम्भवं-रघुवंशं च ( )
(घ) कुमारसम्भवं-शाकुन्तलं च ( )

१७.प्रश्नः- अश्वघोषस्य काव्येषु इदमप्येकम्?
(क) नागानन्दम् ( ) (ख) जानकीहरणम् ( )
(ग) शारीपुत्रप्रकरणम्( ) (घ) हरविजयम् ( )

१८.प्रश्नः- भासनाटकचक्रे कति नाटकानि सन्ति?
(क) चतुर्दश ( ) (ख) दश ( )
(ग) द्वादश ( ) (घ) त्रयोदश ( )

१९.प्रश्नः- अभिषेकनाटकस्योपजीव्यः कः?
(क) रामायणम् ( ) (ख) भागवतम् ( )
(ग) महाभारतम् ( ) (घ) न कोऽपि ( )

२०.प्रश्नः- वृहत्कथामञ्जरीकारः कः?
(क) विष्णुशर्मा ( ) (ख) क्षेमेन्द्रः ( )
(ग) महेन्द्र शर्मा ( ) (घ) विल्हणः ( )

२१.प्रश्नः- दशकुमारचरितम्, हर्षचरितम्-अनयोः कर्त्तारौ कौ?
(क) सुबन्धु-भासः ( ) (ख) क्षेमेन्द्र-कुमारदासः( )
(ग) दण्डी-बाणः ( ) (घ) भवभूतिः-भासः ( )

२२.प्रश्नः- 'तिलकमञ्जरी' कस्य कृति?
(क) बाणभट्टस्य ( ) (ख) धनपालस्य ( )
(ग) धनञ्जयस्य ( ) (घ) धनिकस्य ( )

२३.प्रश्नः- महर्षि वेदव्यासत्वेन प्रसिद्धोऽयम्?
(क) भारतरचयिता ( ) (ख) व्यासः ( )
(ग) महाभारतकर्त्ता ( ) (घ) धनिकः ( )

२४.प्रश्नः- कति पुराणानि?
(क) षोडश ( ) (ख) त्रीणि ( )
(ग) एकोनविंशतिः ( ) (घ) अष्टादश ( )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२५.प्रश्नः- अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते, रूपकं तत्समारोपात्- इति कुत्र श्रुतम्?

(क) दशरूपके ( ) (ख) काव्यमीमांसायाम्( )
(ग) काव्यप्रकाशे ( ) (घ) साहित्यदर्पणे ( )

२६.प्रश्नः- 'वृत्तरत्नाकरः' इत्ययं ग्रन्थः कं शास्त्रमवलम्बते?

(क) व्याकरणशास्त्रम्( ) (ख) छन्दःशास्त्रम् ( )
(ग) अलङ्कारशास्त्रम् ( ) (घ)ज्योतिषशास्त्रम् ( )

२७.प्रश्नः- 'सरसिजमनुविद्धं शैवलेनापि रम्यम्'- अत्र को छन्दः?

(क) वसन्ततिलका ( ) (ख) मालिनी ( )
(ग) शालिनी ( ) (घ) शिखरिणी ( )

२८.प्रश्नः- 'नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्' अत्र कोऽलङ्कारः?

(क) अनुप्रासः ( ) (ख) यमकम् ( )
(ग) रूपकम् ( ) (घ) श्लेषः ( )

२९.प्रश्नः- कस्मिन् अलङ्कारे 'मिथ्याज्ञानं' भवति?

(क) सन्देहः ( ) (ख) उत्प्रेक्षा ( )
(ग) भ्रान्तिमान् ( ) (घ) निदर्शना ( )

३०.प्रश्नः- कारणं विनापि कार्यजननं स्यात् तर्हि कः अलङ्कारः?

(क) हेत्वलङ्कारः ( ) (ख) विरोधालङ्कारः ( )
(ग) विरोधाभासालङ्कारः( ) (घ) विभावनालङ्कारः ( )

३१.प्रश्नः- रीतयः कति?

(क) चत्वारि ( ) (ख) चतस्रः ( )
(ग) त्रीणि ( ) (घ) पञ्च ( )

३२.प्रश्नः- अभिनयः कतिविधः?

(क) अष्टविधः ( ) (ख) चतुर्विधः ( )
(ग) सप्तविधः ( ) (घ) त्रिविधः ( )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## उत्तराणि

| | | | |
|---|---|---|---|
| ०१. ख | ०९. ग | १७. ग | २५. क |
| ०२. घ | १०. ग | १८. घ | २६. ख |
| ०३. ग | ११. ख | १९. क | २७. ग |
| ०४. ख | १२. क | २०. ख | २८. ख |
| ०५. क | १३. ग | २१. ग | २९. ग |
| ०६. ख | १४. घ | २२. ख | ३०. घ |
| ०७. ग | १५. ख | २३. घ | ३१. ख |
| ०८. घ | १६. ग | २४. घ | ३२. ख |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोरमा-रत्नविमर्शः । केशवदेव तिवारी । (१-२ भाग)
महाभाष्यनवाह्निकीयालोचनम् । (नवाह्निक-प्रश्नोत्तरी) विजयमित्र शास्त्री
मालविकाग्निमित्र-रहस्यम् । डॉ. बालगोविन्द झा
मीमांसापरिभाषा सोपानम् । डॉ. शिवप्रसाद द्विवेदी
मुक्तावली-प्रकाश । (न्यायसिद्धान्तमुक्तावली-प्रश्नो.) राजेन्द्रप्रसाद कोठ्यारी
मुद्राराक्षस-विवेकः । लोकमणि दाहाल
मृच्छकटिक-सोपानम् । डॉ. नरेश झा
मेघदूत-तत्वालोकः । अशोकचन्द्र गौड़ शास्त्री
रघुवंश-रहस्यम् । रामप्रसाद त्रिपाठी । १-३ सर्ग, ६-७ सर्ग, १३-१४ सर्ग
रत्नावलीनाटिका सोपानम् । डॉ. शिवप्रसाद द्विवेदी
रसगङ्गाधर-सारः । डॉ. नरेश झा
लघुशब्देन्दुशेखर-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
लघुसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्र शास्त्री
वक्रोक्तिजीवित-दीपिका । डॉ. न[illegible]श झा
[illegible]क्यपदीय-प्रकाशिका । (ब्रह्मकाण्ड) । डॉ. सुरेशचन्द्र शर्मा
वासवदत्ता-रहस्यम् । डॉ. शिवप्रसाद द्विवेदी
वेणीसंहार-रहस्यम् । पं. परमेश्वरदीन पाण्डेय
वेदान्तपरिभाषा-सौरभम् । आचार्य शिवप्रसाद द्विवेदी
वेदान्तसार-प्रदीपः । श्री राजेन्द्रप्रसाद कोठ्यारी
वैदिकसाहित्येतिहास-सोपानम् । डॉ. शिवप्रसाद द्विवेदी
वैयाकरणभूषणसार-दीपिका । श्री रामकिशोर त्रिपाठी
वैयाकरणसिद्धान्तकौमुदी-चन्द्रिका । शास्त्री एवं त्रिपाठी । (१-४ खण्ड) सम्पूर्ण
वैयाकरणसिद्धान्तलघुमञ्जूषा-रहस्यम् । स्वामी रामेश्वर पुरी
वृत्तर[illegible]कर-दीपिका । पं. वेदव्यास शुक्ल
व्यक्तिविवेकप्रश्नोत्तरीः । (१-२ विमर्श) कोठ्यारी एवं द्विवेदी
व्याकरणशास्त्रस्येतिहासः । डॉ. ब्रह्मानन्द त्रिपाठी
शाकुन्तल-रहस्यम् । त्रिलोकीनाथ द्विवेदी
शिवराजविजय-दीपिका । पं. वेदव्यास शुक्ल । प्रथम विराम
शिशुपालवध-रहस्यम् । श्री अशोकचन्द्र गौड़ शास्त्री । १-४ सर्ग
संस्कृतसाहित्येतिहास-कुञ्जिका । आचार्य परमानन्द शास्त्री
सांख्यकारिकादर्शः । राजेन्द्रप्रसाद कोठ्यारी
साहित्यदर्पणालोकः । रामजीलाल शर्मा । (१-६ परि.; ७-१० परि.) सम्पूर्ण
[illegible]हित्यशास्त्रीयोनिबन्धेतिहासः । वेदव्यास शुक्ल ।
सिन्धुवादवृत्त-[illegible]स्यम् । डॉ कृष्णदेव प्रसाद
स्वरवैदिकी [illegible]काशः । डॉ. बालगोविन्द झा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

